# रुद्रयामलम्

## [उत्तरतन्त्रम्]

( प्रथमो भागः )

सम्पादकः

आचार्यश्रीरामप्रसादत्रिपाठी

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

योगतन्त्र-ग्रन्थमाला
[सप्तमं पुष्पम्]

# रुद्रयामलम्

[उत्तरतन्त्रम्]

(प्रथमो भागः)

सम्पादकः
आचार्यश्रीरामप्रसादत्रिपाठी
व्याकरण-वेद-धर्मागमविभागाध्यक्षचरः
वेदवेदाङ्गसंकायाध्यक्षश्च
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

YOGATANTRA-GRANTHAMĀLĀ

[ Vol. VII ]

# RUDRAYĀMALAM

( PART ONE )


Edited by

ĀCĀRYA ŚRĪ RĀMAPRASĀDA TRIPĀṬHĪ

Ex. Professor & Head of Department

of

Vyākaraṇa-Yoga-Tantra & Āgama

Sampurnanand Sanskrit University

Varanasi


VARANASI

1991

Research Publication Supervisor—
**Director, Research Institute,**
Sampurnanand Sanskrit University
Varanasi.

□

Published by—
**Dr. Harish Chandra Mani Tripathi**
Publication Officer,
Sampurnanand Sanskrit Universit y
Varanasi-221 002.

□

Available at—
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi-221 002.

□

Second Edition—1000 copies.

Price—Rs. 132.00

□

Printed at—
**Ratna Printing Works**
B 21/42 A, Kamachha,
Varanasi-221 010.

योगतन्त्र-ग्रन्थमाला

[सप्तमं पुष्पम्]

# रुद्रयामलम्

[ उत्तरतन्त्रम् ]

( प्रथमो भागः )

सम्पादकः

**आचार्यश्रीरामप्रसादत्रिपाठी**

व्याकरण-योग-तन्त्रागमविभागाध्यक्षचरः,

वेदवेदाङ्गसंकायाध्यक्षचरश्च

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वारामसी

वाराणस्याम्

२०४७ तमे वैक्रमाब्दे   १९१२ तमे शकाब्दे   १९९१ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः—
**निदेशकः, अनुसन्धानसंस्थानस्य**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।

□

प्रकाशकः—
**डॉ० हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी-२२१ ००२.

□

प्राप्तिस्थानम्—
**विक्रय-विभागः,**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी-२२१ ००२.

□

द्वितीयं संस्करणम्, १००० प्रतिरूपाणि

मूल्यम्—१३२-०० रूप्यकाणि

□

मुद्रकः—
**रत्ना प्रिंटिंग वर्क्स**
बी २१/४२ ए, कमच्छा,
वाराणसी-२२१ ०१०.

# प्ररोचना

पण्डितवर्य**श्रीरामप्रसादत्रिपाठि**महोदयैः सम्पादितो भूमिकासंवलितश्च **रुद्रयामल**ग्रन्थोऽधुना प्रकाश्यतामानीयते। सम्प्रति प्रथमः खण्डः पुरस्क्रियते। तदनु कालेन द्वितीयः खण्डोऽपि प्रकाशयिष्यते। रुद्रयामले विशेषेण विवेच्यविषयस्तन्त्रसाधनासम्बद्धदेशकालानां मन्त्ररहस्यस्य, स्वररहस्यस्य, षट्चक्रादिदेवतानां रहस्यस्य चेति भूमिकायां विद्वद्वर्यैः मालिनेः स्वरूपविमर्शप्रकरणे व्याकरणागमदृष्ट्या सूक्ष्मतया वर्ण्यविषयो व्यवारि। पण्डितवर्यैः तन्त्राणां वेदाविरोधित्वविषये नूतना उपपत्तयः प्रदर्शिताः। पटलशः संक्षेपेण रुद्रयामलस्य विषयोऽपि वर्णितः। यत्र तत्र संक्षिप्ताः पादटिप्पण्योऽपि संयोजिताः। रुद्रयामलग्रन्थ एकः खलु आकरग्रन्थः, यत्र त्रिपुरसुन्दर्युपासनाविषये विविधानां रीतीनां पद्धतीनाञ्च समाकलनं विद्यते। सम्प्रदायानां परिचयोऽपि विशदतया प्रस्तुतः। एभिर्गुणै रुद्रयामलग्रन्थस्तन्त्रशास्त्राध्येतॄणां कृते महते परितोषाय भविष्यतीति आशासे। एतदर्थं पण्डितवर्यान् श्रीरामप्रसादत्रिपाठिमहोदयान् सभाजयामि।

**वाराणस्याम्**,
महाशिवरात्रिपर्वणि
२०४७ तमे वैक्रमाब्दे,
(१२।२।१९९१ तमे खैस्ताब्दे)

**विद्यानिवासमिश्रः**
कुलपतिः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# प्रास्ताविकम्

## (प्रथमसंस्करणस्य)

यद्यपि विश्वस्मिन् संस्कृतवाङ्मयं निस्संशयं सर्वेभ्यो वाङ्मयेभ्यः पुरातनतमं चकास्ति, तथापि योरुपीया विद्वांसः प्रयतमाना दृश्यन्ते ग्रीकलैटिनाऽवेस्तादिभाषाणां संस्कृतसमकालिकत्वसाधनाय; किन्तु जनजीवनकल्याणदृग्भिर्भारतीयमनीषिभिः प्रतिक्षेत्रं यादृशं वाङ्मयं संदृब्धम्, अनितरसाधारणं तादृशं खलु पुरातनतमं सदपि नूतनतमं कस्यामपि भाषायां नाधिगम्यत इति व्याहृतौ नास्ति कश्चिदपि प्रौढिलेशः। एकैकस्मिन् शास्त्रेऽपारो वाङ्मयपारावारव्यापारप्रसारो भारतीयसंस्कृतिसुवासेन सार्धमेव पारेजम्बूद्वीपमपि क्षेत्राणि प्लावयामासेति साम्प्रतं तदीयं समग्रमाकलनं चिरकालिकं महान्तमध्यवसायं प्रतीक्षते।

शास्त्रेष्वन्यतमं शिवोक्तं तन्त्रशास्त्रं चतुषष्टिसंख्याकं वर्णितम्। तेषु चतुषष्टिसंख्याकेषु तन्त्रग्रन्थेषु 'राधाख्यं मालिनीतन्त्रं रुद्रयामलमुत्तमम्' इत्युक्त्या यद्यपि रुद्रयामलस्यापि समावेशो दृश्यते, तथापि 'सर्गश्च प्रतिसर्गश्च मन्त्रनिर्णय एव च' इत्यादिलक्षणात् तन्त्राद् अष्टलक्षणात्मकं यामलं ततो विशिष्टमिवाभिहितम्—

सृष्टिश्च ज्योतिषाख्यानं नित्यकृत्यप्रदीपनम्।
क्रमसूत्रं वर्णभेदो जातिभेदस्तथैव च।
युगधर्मश्च संख्यातो यामलस्याष्टलक्षणम्॥ इति।

अष्टलक्षणात्मकमपि यामलं वाराहीतन्त्रे षड्विधमुक्तम्—१. आदियामलम्, २. ब्रह्मयामलम्, ३. विष्णुयामलम्, ४. रुद्रयामलम्, ५. गणेशयामलम्, ६. आदित्ययामलं चेति। विष्णुयामलब्रह्मयामलयोरनन्तरं रुद्रयामलस्योपदेशादुत्तरतन्त्रतया तत् प्रसिद्धिमुपगतम्। यथा रुद्रयामलस्यैवारम्भे—

परा-श्रीपरमेशानीवदनाम्भोजनिःसृतम्।
श्रीयामलं महातन्त्रं स्वतन्त्रं विष्णुयामलम्॥ १।

शक्तियामलमाख्यातं ब्रह्मणस्तुतिहेतुना।
ब्रह्मयामलवेदाङ्गं सर्वं च कथितं प्रिये॥ २।

इदानीमुत्तराकाण्डं वद श्रीरुद्रयामलम्।
यदि भाग्यवशाद् देवि तव श्रीमुखपङ्कजे॥ इति।

सर्वेषां यामलानां श्लोकसंख्या पृथक् पृथग् निर्धारिता वर्तते। यथा—

यामलाः षट् च संख्यातास्तत्रादावादियामले।
द्वाविंशच्च सहस्राणि त्रयस्त्रिंशच्छतानि च॥

द्वितीये ब्रह्मसंज्ञे ते द्वाविंशतिश्च संख्यया ।
सहस्राणि शतान्यत्र तान्येव कथितानि च ॥
तावत्संख्यासहस्राणि शतानि परिसंख्यया ।
विंशतिश्च तथा संख्या श्लोकाश्च विष्णुयामले ॥
कालसंख्यासहस्राणि वेदसंख्याशतानि च ।
पञ्चषष्टिस्तथा श्लोकाः कनिष्ठे रुद्रयामले ॥ इति ।

एवं तावद् यद्यपि रुद्रयामलमुक्तेषु यामलेषु कनिष्ठमाख्यातमिति तदीया श्लोकसंख्या ३४६५ इतीह प्रसिध्यति, तथापि महासिद्धिसारस्वततन्त्रानुसारेण —

न शक्यं विस्तराद् वक्तुमपि वर्षशतैरपि ।
संक्षेपाद् वै प्रवक्ष्यामि लोककल्पोक्तवर्त्मना ॥
दिवि देवे नवलक्षं पाताले ब्रह्मशासने ।
लक्षमात्रं भारते च क्षितौ तन्त्राणि यानि च ॥

श्लोकसंख्या निर्धारयितुं न पार्यते । यथा पुराणानि भारतीयसंस्कृतेर्विश्वकोशात्मकानि प्रतिज्ञायन्ते, तथा तन्त्रशास्त्रं साधनाव्यापारदिशि ततोऽपि समृद्धतरं नाम विलसति । महाविश्वेश्वरतन्त्रानुसारेण तल्लक्षणानि पुराणलक्षणेभ्योऽप्यधिकानि—

सर्गश्च प्रतिसर्गश्च मन्त्रनिर्णय एव च ।
देवतानां च संस्थानं तीर्थानां चैव वर्णनम् ॥
तथैवाश्रमधर्मश्च विप्रसंस्थानमेव च ।
संस्थानं चैव भूतानां यन्त्राणां चैव निर्णयः ॥
उत्पत्तिर्विबुधानां च तरूणां कल्पसंज्ञितम् ।
संस्थानं ज्योतिषां चैव पुराणाख्यानमेव च ॥
कोषस्य कथनं चैव व्रतानां परिभाषणम् ।
शौचाशौचस्य चाख्यानं नरकाणां च वर्णनम् ॥
हरचक्रस्य चाख्यानं स्त्रीपुंसोश्चैव लक्षणम् ।
राजधर्मो दानधर्मो युगधर्मस्तथैव च ॥
व्यवहारः कथ्यते च तथा चाध्यात्मवर्णनम् ।
इत्यादिलक्षणैर्युक्तं तन्त्रमित्यभिधीयते ॥ इति ।

वस्तुतस्तु तन्त्रशास्त्रमितोऽप्यधिकान् वर्णनकोणानधितिष्ठतीति साकल्येन तल्लक्षणनिर्धारणं नावाप्यते ।

रुद्रयामलतन्त्रस्य यद् द्वितीयं संस्करणं १८९२ खैस्ताब्दे श्रीजीवानन्दविद्यासागरभट्टाचार्येण कालिकातानगर्यां प्रकाशितम्, तस्य पटलेषु श्लोकसंख्यायां चास्य सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयसंस्करणस्य पटलश्लोकसंख्यातः पर्याप्तं भेदो भवति । विदुषां जिज्ञासूनां च ज्ञानार्थमुभयोस्तुलनात्मकविवरणसूचीह प्रस्तूयते—

| पटलाः | श्लोकाः | जीवा० | पटलाः | श्लोकाः | जीवा० |
|---|---|---|---|---|---|
| १ | २४४ | २४५ | ३५ | ४५ | ४५ |
| २ | १६२ | १६१ | ३६ | २१० | २०६ |
| ३ | १४५ | १४० | ३७ | ३५ | ३५ |
| ४ | १९२ | १८६ | ३८ | ५८ | ५७ |
| ५ | ४५ | ४४ | ३९ | ३४ | ३० |
| ६ | १०६ | १०२ | ४० | २३ | २२ |
| ७ | ९४ | ९३ | ४१ | ४६ | ४५ |
| ८ | ६७ | ६७ | ४२ | १४८ | १३८ |
| ९ | ४४ | ४४ | ४३ | ३७ | ४० |
| १० | १८५ | १९३ | ४४ | ८७ | ८६ |
| ११ | ७५ | ७६ | ४५ | ३८ | ३७ |
| १२ | ५३ | ४९ | ४६ | ५८ | ५६ |
| १३ | ९० | ९० | ४७ | ५७ | ५८ |
| १४ | ७४ | ७४ | ४८ | २८२ | २७४ |
| १५ | ६६ | ६६ | ४९ | ३२ | ३१ |
| १६ | ४६ | ४४ | ५० | ३३ | ३२ |
| १७ | १६३ | १६३ | ५१ | ७३ | ७१ |
| १८ | ८३ | ८३ | ५२ | २१२ | २०९ |
| १९ | ५० | ४९ | ५३ | २५ | २३ |
| २० | ४३ | ४२ | ५४ | ७७ | ७३ |
| २१ | ११४ | ११३ | ५५ | ३४ | ३३ |
| २२ | १०९ | १०८ | ५६ | १६ | १६ |
| २३ | ११४ | ११३ | ५७ | ७४ | ७० |
| २४ | १४४ | १४३ | ५८ | ४३ | ३८ |
| २५ | १२९ | १२९ | ५९ | ३९, २६ | ३८ |
| २६ | १४८ | १४५ | ६० (जीवा० ६३) | २३ | १०३ |
| २७ | १०५ | १०४ | ६१ (जीवा० ६४) | २४२ | ३५ |
| २८ | १०२ | ९९ | ६२ (जीवा० ६५) | २२ | १४० |
| २९ | ४३ | ४१ | ६३ (जीवा० ६६) | ८२ | २२ |
| ३० | ४१ | ३७ | ६४ | | १६६ |
| ३१ | ४६ | ४२ | ६५ | २२ | २२ |
| ३२ | ४३ | ३२ | ६६ (जीवा० ६१) | ३८ | ७४ |
| ३३ | ६५ | ६५ | ६७ (जीवा०६२) | १२६ | २२ |
| ३४ | ५७ | ६१ | | | |

६८ तः ९० पटलान्तं यावद् या सामग्रीह विश्वविद्यालयीये संस्करणे लभ्यते, सा जीवानन्दीये संस्करणे न दृश्यते। इह संस्करणे पाठभेदात् पटलसंख्या द्विरावृत्तेति सा पञ्चविंशपटलादग्रे व्यत्यस्ता।

स्वनामधन्यानां म० म० गोपीनाथकविराजमहोदयानां निर्देशने चतुर्थभागस्यास्य तन्त्रसंग्रहस्य सम्पादनं पूर्ववर्तिभागवद् योगतन्त्रविभागेन समारब्धमासीत्। इह सम्पादनविधौ तेन क० ख० ग० इति सङ्केतैस्तिस्रो मातृका उपयोजिता अभूवन्, यासां विवरणं कविराजमहोदयैस्तदीये तन्त्रसूचीग्रन्थे समुपन्यस्तम्। द्विसप्ततितमपटलं यावदेव पाठभेदविवरणं दृश्यते; किन्त्विह मुद्रितस्य जीवानन्दविद्यासागरसम्पादितस्य रुद्रयामल-संस्करणस्य पाठभेदानां समुल्लेखो नास्ति। यद्यपि तत्र सन्ति भूयांसः पाठभेदाः, तथाप्यत्रान्तिमपुष्पिकागतैः पाठभेदैः सार्धमस्य संस्करणस्य पाठभेदानां तुलना निदर्शनार्थं प्रस्तूयते—

| पटलम् | प्रस्तुते संस्करणे पाठाः | जीवानन्दसंस्करणे पाठाः |
|---|---|---|
| २. अन्तिमपुष्पिका | महायन्त्रोद्दीपने | महामन्त्रोद्दीपने |
| ३. ,, ,, | मन्त्रो० | तन्त्रो० |
| ५. ,, ,, | तन्त्रो० | मन्त्रो० |
| ८. ,, ,, | सिद्धि० | सिद्ध० |
| ९. ,, ,, | यन्त्रो० सिद्धि० | तन्त्रो० सिद्ध० |
| १२. ,, ,, | वाशव० | पाशव० |
| १४. ,, ,, | चक्र० | चक्रसार० |
| १६. ,, ,, | × | वेदभाषापरिच्छेदे |
| १६. ,, ,, | भैरवभैरवी० | भैरवीभैरव० |
| १७. ,, ,, | ,, | ,, |
| १८. ,, ,, | ,, | ,, |
| १९. ,, ,, | अर्थ० | अर्थबोध० |
| २१. ,, ,, | भावार्थ० | भावप्रश्नार्थ० |
| ३५. ,, ,, | साधनं० | पञ्चस्वरयोगसाधनं० |
| ४८. ,, ,, | मन्त्रप्रकाशो नाम | षट्चक्रप्रकाशे |
| ५८. ,, ,, | काकिनीश्वरपर्णपार्श्व० | काकिनीपार्श्व० |

जीवानन्दसंस्करणे या सामग्री षष्टितमपटलस्य सप्तदशश्लोकादारभ्य द्विषष्टि-तमपटलं यावद् विद्योतते, सेह विश्वविद्यालयीये संस्करणे नोपलभ्यते। अस्य विश्वविद्या-लयीयस्य संस्करणस्य षष्टितमपटलस्यान्तिमपुष्पिकायां जीवानन्दसंस्करणस्य तु ६१-६३ पटलानामन्तिमपुष्पिकायां विषयभेदा विलोक्यन्ते।

## प्रस्तुतं संस्करणम्

जीवानन्दविद्यासागरीये संस्करण एकस्या एव मातृकाया आधारेण पाठालोचनमन्तरा यथोपलब्धं मुद्रितं प्रकाशितं च। प्रस्तुते संस्करणे त्वाधारत्वेन स्वीकृताया मातृकायास्तिसृभिर्मातृकाभिः पाठभेदपरामर्शोऽस्य संस्करणस्य सम्पादने प्रमुखं वैशिष्ट्यम्। जीवानन्दविद्यासागरीयं संस्करणं षट्षष्टिपटलान्तं विभ्राजते। प्रस्तुतं संस्करणं तु नवतितमपटलान्तं विद्योतते। एवं तावदिह तदपेक्षया त्रयोविंशतिसंख्याकाः पटला अधिकाश्चकासति। यद्यप्युभयत्र पटलभेदेऽपि विषयभेदानां प्राज्यता वर्तते, तथापि बहूनि वैशिष्ट्यानि दृष्टिपथं नातिक्रामन्ति। योगतन्त्रग्रन्थमालायाः सप्तमप्रसूनतया विकचितमिदं संस्करणं तन्त्रविद्याया मर्मज्ञानां विपश्चितां प्रीणनाय जिज्ञासूनां च ज्ञानसंवर्धनाय सेत्स्यतीति ध्रुवं विश्वसिति।

| | |
|---|---|
| वाराणस्याम्,<br>मातृनवम्याम्, २०३७ वै०<br>( २-१०-८० खै० गुरौ ) | **भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**<br>निदेशकः<br>अनुसन्धानसंस्थानस्य |

॥ श्रीहरिः शरणम् ॥

# प्रस्तावना

ईश्वरजीवयोः कीदृशं स्वरूपम् ? कीदृशश्च तयोः परस्परं सम्बन्धः ? कीदृशं खलु बन्धमोक्षयोः स्वरूपम् ? कथं नु किल प्रवर्तते सृष्टिसंहारयोः प्रक्रिया ? ईदृशानां प्रश्नानां समाधानमुखेन बहोःकालात् प्रचलन्ती भारतीयदार्शनिकचिन्तनपरम्परा समास्ते । दर्शनं नाम आत्मानात्मविवेचको नियमविशेषः । शास्त्रमपि आत्मानात्मज्ञापकं साक्षात्परम्परया वा भवदिष्टप्राप्त्यनिष्टपरिहारोपायं वेदयच्छासकमपि भवति । बहुधा दर्शनशास्त्रयोरभेदेन विशेषणविशेष्यभावो दृश्यते–"दर्शनं शास्त्रम्" इति वाक्यप्रयोगेण । "आत्मा वाऽऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः", "तत्त्वमसि श्वेतकेतो ! तद्ब्रह्म त्वं विद्धि, तद्विजिज्ञासस्व", "ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्", "तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्" इत्याद्याः श्रुतयोऽपि दर्शनस्य शास्त्रत्वं प्रतिपादयन्त्यो वैदिकत्वमपि तस्य सम्यक् समर्थयन्ते। **शुक्लयजुर्वेदीयमाध्यन्दिन-संहितायां**[1] भगवन्तं रुद्रमुद्दिश्य तावदेकोऽध्यायो "नमस्ते रुद्र मन्यव" इत्यादि-र्नमस्कारानुवाकाभिधानो वर्तते । **श्वेताश्वतरोपनिषदि** शिवरुद्रयोः स्वरूपं दार्शनिकदृशा बाढं निरूपितमस्ति । एवं सति दर्शनविशेषाः शैवागमा निगमान् विरुन्धन्ति, न समन्वि-यन्तीति विप्रतिपद्यमानाः पण्डितम्मन्या न प्रमितवचना इति मन्यामहे ।

आस्तिकानां सर्वेषामेव दर्शनानामागमानां वा स्रोतांसि वेदा एवेत्यत्र नास्ति कश्चन संशीतिलेशः । इयान् विशेषः—वेदाः परमेशितुर्निःश्वासभूताः स्वत एवाविर्भवन्ति, आगमास्तु पारम्पर्यपरत्वं भजन्ते । तेषामाद्य उपदेष्टा पार्वतीपतिर्विश्वनाथो भगवान् शिव एव पार्वतीमुपदिदेश तद्रहस्यजातम् । उक्तञ्च स्वच्छन्दतन्त्रे—

आगतं शिववक्त्रेभ्यो गतं च गिरिजामुखे ।<br>
मतं हि वासुदेवस्य तस्मादागम उच्यते ॥ इति ।

अनयोक्त्या स्पष्टं प्रतीयते यद्वासुदेवाभिमतमागमशास्त्रं भगवतः शिवात् श्रीपार्वतीश्रवणविषयतामगमत् ।

इदमपि ध्येयम्—आगमोपदेशो गुरुपरम्परासम्बन्धमपेक्षमाणः किञ्चिदनुशास-नमपि वेदयते, गुरव आगमैः शिष्याननुशासतीति कृत्वाऽऽगमानां शास्त्रत्वमपि मन्तव्यम् । आचार्येण हरिणाऽप्यत एव व्याकरणशास्त्रस्यागमत्वं स्पष्टतयोक्तम्—

"तद् व्याकरणमागम्य परं ब्रह्माधिगम्यते ।<br>
पर्वतादागमं लब्ध्वा......................" ॥ इत्यादि ।

---

१. शु० य० वे० १६।२।४९।

ननु रुद्रयामलमुद्दिश्यैषा भूमिका लिख्यते, तस्य तु तन्त्रग्रन्थेषु परिगणनं क्रियते तन्त्ररहस्यविद्भिः। तत्र च शिवस्य शक्तेश्चाभेदः सिद्धान्तितोऽस्ति, आगमग्रन्थेषु तु शिवशक्त्योः पार्थक्येन प्राधान्यं विविच्यमाणं वर्तत इति। यामलग्रन्थानामागमत्वमस्ति न वा? इति संशये जागरूके आगमविषयिण्याश्चर्चाया उत्थापनमप्रासङ्गिकं प्रतिभातीति चेत्, उच्यते—तन्त्रागमयोः सकलशास्त्रे परस्परमभेदेन व्यवहारदर्शनात्।

## तन्त्रशब्दार्थविमर्शः, आगमेनाभेदकथनं च

तन्यन्ते विस्तीर्यन्ते ऐहिकामुष्मिकाभ्युदयनिःश्रेयससाधका उपाया अनेनेति व्युत्पत्तिमादधानोऽस्ति तन्त्रशब्दः। तत्र 'तनु' विस्तारे इति तानादिकाद् धातोः करणेऽर्थे "सर्वधातुभ्यः ष्ट्रन्" इत्यौणादिकसूत्रेण ष्ट्रन्प्रत्यये सति तन्त्रशब्दो निष्पन्नो भवति। अथवा 'तत्रि' कुटुम्बधारणपोषणयोरित्यस्माच्चौरादिकाद् धातोः कर्मणि करणेऽधिकरणे वा "अकर्तरि च कारके संज्ञायाम्[1]" इति पाणिनीयसूत्रेण घञ्प्रत्यये कृते सति 'तन्त्र्यते यद्, येन, यत्र वा' इति व्युत्पत्तिभिः तन्त्रशब्दस्य साधुत्वं विधीयते। ततश्च "समाजस्य धारकत्वं पोषकत्वं वा तन्त्रत्वम्" इति, "नियमविशेषनियन्त्रितलोकत्वं तन्त्रत्वम्" इति वा लभ्यते। तथा चोक्तम्—

तनोति विपुलानर्थान् तत्त्वमन्त्रसमन्वितान्।
त्राणं च कुरुते यस्मात् तन्त्रमित्यभिधीयते॥
व्यवहारः कथ्यते यत्र तथा चाध्यात्मवर्णनम्।
इत्यादिलक्षणैर्युक्तं तन्त्रमित्यभिधीयते॥ इति।

## आगमशब्दार्थविचारः

आङ्पूर्वकाद् गम्धातोर्गत्यर्थकाद् भौवादिकाद् "ग्रहवृदृनिश्चिगमश्च"[2] इति पाणिनीयसूत्रेण कर्मणि करणेऽधिकरणे वा अप्प्रत्यये 'आगम्यते यो येन यत्र वेति विग्रहे' आगमशब्दो निष्पद्यते। ततश्च गतिः प्राप्तिः, ज्ञानं वा इति स्वीकृत्या सम्यक्प्राप्तिविषयः, सम्यक्प्राप्तिसाधनम्, सम्यग्ज्ञानाधिकरणमिति त्रयोऽर्था लभ्यन्ते। सम्यक्प्राप्तिविषयता मोक्षरूपपुरुषार्थस्यैव भवितुमर्हतीति मोक्षतत्त्वम्, मोक्षसाधनत्वम्, आगमत्वमिति आद्यविग्रहद्वयीयोऽर्थः। तृतीयविग्रहेण तु सम्यग् ज्ञानमात्मज्ञानमेव तदधिकरणमात्मैवेति आत्मैवागमपदार्थ इति वक्तुं शक्यते। आभिर्व्युत्पत्तिभिर्मोक्षतत्त्वस्य ज्ञापकत्वं साधनत्वम्, आत्मतत्त्वविवेचकत्वं वा आगमशास्त्रत्वमित्यायाति। तच्च समाजस्य पोषणमन्तरा न सम्भवतीति समाजपोषणनियमविशेषज्ञापकत्वे सति आत्मतत्त्वस्य ज्ञापकत्वमनुशासकत्वं वाऽऽगमत्वमिति पर्यवस्यति। समाजपोषकत्वं तन्त्रत्वमित्यत्र समाजपोषणं किमर्थमिति विचारे क्रियमाणे आत्मज्ञानार्थमिति उत्तरमायाति। एवं च तन्त्रपदार्थस्य फलमागमपदार्थः, आगमपदार्थस्य साधनं तन्त्रपदार्थः, द्वयोरनयोस्साध्यसाधनभावेनैव पूर्णता। अतश्च योगरूढ्या तन्त्रागमशब्दार्थयोः साम्यं दृष्ट्वा तान्त्रिकैरन्यैर्वा विद्वद्भिरभेदेनानयोर्व्यवहारः कृतः।

---

१. पा० सू० ३।३।१९;  २. तदेव—३।३।५८।

तथा हि—मृगेन्द्रतन्त्रं मृगेन्द्रागमः, शैवतन्त्रं शैवागमः, भैरवतन्त्रं भैरवागम इत्यादि। तथा च "मालिनीविजयवार्तिके" (पृ० ३६-३८) तदनुगामिनि "तन्त्रालोकविवेके" (भा० १, पृ० ३६-४१) शिवस्य पञ्चवक्त्रेभ्यो दशानां शैवागमानामष्टादशानां च रौद्रागमानां चतुःषष्टिसंख्याकानां च भैरवागमानामाविर्भावप्रकारो निरूपितोऽस्ति। तेषु स्थलेषु आगमशब्देन तन्त्रस्य व्यवहारः सुस्पष्टमभिहितः।

एवञ्च दर्शनशास्त्र-तन्त्र-आगमशब्देषु समानतया सामान्यविशेषभावेन वा कृतो व्यवहारोऽनुभूयत इति निष्कर्षः।

## यामलतत्त्वविमर्शः

शैव-शाक्त-यामलभेदात्तन्त्रस्य त्रैविध्यमस्ति। शैवतन्त्रे शिवभट्टारकस्य, शाक्ततन्त्रे शिवाभट्टारिकायाः, यामलतन्त्रे तु पुनर्द्वयोरनयोरभेदस्य वर्णनं कृतमस्ति। तत्र शिवतत्त्वमर्थरूपम्, शक्तितत्त्वं शब्दरूपम्, तस्य तत्त्वद्वयस्य भेदकल्पनाऽत्र तन्त्रे नैव कर्तुं शक्यते; अपि तु योऽयं शब्दः, सोऽर्थः, योऽर्थः, सोऽयं शब्द इति रीत्या येयं शक्तिः, सोऽयं शिवः, योऽयं शिवः, सेयं शक्तिरित्येष सिद्धान्तो यामलतन्त्रेऽभिमतोऽस्ति। यत्र च सामान्यविशेषयोः सामरस्येनावस्थितिः, सूर्यसोमादिद्वन्द्वात्मकपदार्थानामविनाभावेन चावस्थितिः, तत्रैव यामलतत्त्वस्य स्वरूपं परिपश्यन्ति तत्त्वविदः। युगलतत्त्वशब्देनाप्यभिलप्यमानमिदं तन्त्रमिति निभाल्यताम्। शिवशक्त्योरुपासकः 'उत्तमः पशुः' इत्युच्यते। उक्तञ्च—

दुर्गापूजां शिवपूजां यः करोति पशूत्तमः।
अवश्यं यः करोति स पशुरुत्तमः स्मृतः'[1] ॥ इति।

द्वयोः सामरस्यं यस्मिन्नुपासके समुदेति, सोऽमृतमास्वदते। उक्तञ्च—

चिच्चन्द्रः कुण्डलीशक्तिः सामरस्यमहोदयः।
व्योमपङ्कजनिःष्यन्दसुधापानरतो नरः[2] ॥ इति।

## यामलतन्त्रस्य भेदविमर्शः

यामलतन्त्राणि कियन्ति सन्ति? अत्र संख्यानिर्धारणं कर्तुमशक्यमस्ति, तथापि वाराहीतन्त्रेऽष्टलक्षणात्मकयामलस्य षाड्विध्यं निर्दिष्टमस्ति, आदियामल-ब्रह्मयामल-विष्णुयामल रुद्रयामल-गणेशयामलादित्ययामलभेदात्। तत्र सम्पूर्णानन्दसंस्कृतविश्वविद्यालये सरस्वतीभवन एकस्यैव कृष्णयामलस्योपलब्धिर्भवति। रुद्रयामलं तूत्तरतन्त्रात्मकं द्वितीयसंस्करणात्मना पुनर्मुद्राप्यते **सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन** वाराणसीस्थेन। अतिरिक्तमपि यामलं प्रसिद्धमस्ति। यथा—ब्रह्मयामल-विष्णुयामल-रुद्रयामल-जयद्रथयामल-स्कन्दयामल-उमायामल-लक्ष्मीयामल-गणेशयामलान्यष्टौ, इत्यर्थरत्नावलीकारेणोक्तम्। ब्रह्मयामल-विष्णुयामल-स्वच्छन्दयामल-रुरुयामल-आथर्वणयामल-रुद्रयामल-

---

१. रु० या० ५।५; २. तत्रैव—२६।१३७।

वेतालयामलानि सप्तैव वर्णितानि श्रीकण्ठ्याम्। ब्रह्मयामले रुद्रयामल-स्कन्दयामल-ब्रह्मयामल-विष्णुयामल-यमयामल-वायुयामल-कुबेरयामल-इन्द्रयामलानि कीर्तितानि सन्ति। एषु ग्रन्थरूपेणोद्धरणरूपेण वेमानि यामलानि समुपलभ्यन्ते, सम्पूर्णानन्दसंस्कृत-विश्वविद्यालयीये योगतन्त्रविभागे। विष्णुयामलं स्कन्दप्रदीपिकायामुत्पलदेवेन, स्कन्दयामलं च तन्त्रालोकेऽभिनवगुप्तेन निर्दिष्टमस्ति। प्राणतोषिणीकारेण श्रीरघुनन्दन-पण्डितेनापि स्मृत एते यामले। तत्र विष्णुयामलस्य ब्रह्मयामलस्य जयद्रथयामलस्य च मातृका अपि समुपलभ्यन्ते। गणेशयामलस्य ग्रहयामलस्य च मातृका आफ्रेख्टबृहत्सूच्यां निर्दिष्टाः। एतेभ्योऽतिरिक्तान्यपि देवीयामल-वीरयामल-संकर्षणीयामलानि क्रमशस्तन्त्रा-लोके, तद्विवेके, स्वच्छन्दोद्द्योते, विज्ञानभैरवविवरणे, तन्त्रालोकविवेके च निर्दिष्टानि सन्ति। शक्तियामल-कृष्णयामलयोर्मातृकाः सरस्वतीभवनपुस्तकालये दृश्यन्ते। आफ्रेख्ट-बृहत्सूच्यामपि वर्ततेऽनयोः सङ्केतः। भैरवयामलं लक्ष्मीधरायां सौन्दर्यलहरीटीकायाम्, कामकलाविलासटीकायां चिद्वल्ल्याम्, विज्ञानभैरवटीकायां विज्ञानेन्दुकौमुद्यां चास्ति सङ्केतितम्।

### रुद्रयामलविषये कश्चन विशेषः

चतुःषष्टिसंख्याकेषु तन्त्रग्रन्थेषु "**राधाख्यं मालिनीतन्त्रं रुद्रयामलमुत्तमम्**" इत्युक्त्या यद्यपि रुद्रयामलस्यापि समावेशो दृश्यते, तथापि "सर्गश्च प्रतिसर्गश्च मन्त्र-निर्णय एव च" इत्यादिलक्षणलक्षितात् तन्त्राद् अष्टलक्षणात्मकं यामलं तदपेक्षया वैलक्षण्येनाभिहितम्। तथा हि—

सृष्टिश्च ज्योतिषाख्यानं नित्यकृत्यप्रदीपनम्।
क्रमसूत्रं वर्णभेदो जातिभेदस्तथैव च।
युगधर्मश्च संख्यातो यामलस्याष्टलक्षणम्॥ इति।

अत्र सृष्टिश्चेत्यत्र चशब्देन प्रतिसर्गस्य ग्रहणम्, अथवा 'युगधर्मश्च' इत्यत्र 'युगैः सहितो धर्मः' अनया रीत्या मध्यमपदलोपिसमासेन युगलः, पृथग्धर्मस्य ग्रहणमिति रीत्याऽष्टलक्षणत्वं यामलस्य बोध्यम्। अथ च—"श्रुतं देव मया सर्वं रुद्रयामल-सम्भवम्" इत्यस्मिन् विज्ञानभैरवस्यादिमे पद्ये, "रुद्रयामलमन्त्रस्य सारमद्यावधारितम्" इत्यस्मिन् तदीयोपान्त्यपद्ये च रुद्रयामलस्य निर्देशः स्पष्टमुपलभ्यते। किञ्च, 'एवं मन्त्र-फलावाप्तिरित्येतद्रुद्रयामलम्' इत्यस्मिन् **परात्रिंशिका**न्तिमश्लोकेऽपि रुद्रयामलस्य प्रशंसामयी चर्चाऽऽयाति। **नित्याषोडशिकार्णवे** चतुःषष्टितन्त्रपरिगणनावसरे यामलाष्टक-मध्येऽस्य गणना विद्यते। 'अर्थरत्नावल्यादिषूद्धृतमुत्तरषट्कमस्यैव भाग इति तत्पुष्पिकावाक्येभ्यः परिज्ञायते। एवं विशिष्टेष्वागमग्रन्थेषु निर्दिष्टस्यास्य वैशिष्ट्यं प्राचीनत्वं च निर्विवादम्। ग्रन्थस्यास्य मातृकाः प्रायः सर्वेष्वेव ग्रन्थालयेषु समुप-लभ्यन्ते। सन्ति च स्तोत्रपटलादीनि बहूनि पुस्तकानि रुद्रयामलान्तर्गततया निर्दिष्टानि।

## मातृकास्वरूपविमर्शः

अखिलमनाहतमूर्तिर्मंत्युत्तीर्णस्वरूपिणी तरति ।
कायति नानानामप्रपञ्चरूपेण मातृका देवी ॥

इत्येवंरूपेण मातृकाया निरूपणं कृतं **सौभाग्यसुधोदये**[1] ।

अत्रायमाशयः—परपरामर्शात्माऽनुत्तरः प्रकाश एव परं तत्त्वम्, स एव स्वीयस्वातन्त्र्याख्यशक्त्या विश्वस्यावभासनेच्छया प्रथमं स्वात्मनि शिवशक्तिरूपतामवभासयति, अकारादिहकारान्तां मातृकामुल्लासयतीति यावत्।अनुत्तरलिपिरत्राकारः, विमर्शलिपिश्च हकारः । अयमेवार्थः—

अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ।
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः ॥

अनेन सङ्केतेन निरूप्यते । तन्त्रालोकेऽपि अयमर्थः स्पष्टं प्रदिपादितः । तथा हि—

अकुलस्यास्य देवस्य कुलप्रथनशालिनी ।
कौलिकी सा परा शक्तिरवियुक्तो यया प्रभुः[2] ॥ इति ।

मातृका मालिनी कालिका शब्दराशिरित्येवं पदैः कीर्त्यमाना परावाग्रूपा सर्ववर्णोद्भवहेतुभूता वर्णसंघातजनितशरीराणां सप्तकोटिसंख्याकानां महामन्त्राणां प्रकाशिकेयं मातृका भगवती । उक्तञ्च तन्त्रसद्भावे—

सर्वे वर्णात्मका मन्त्रास्ते च शक्त्यात्मकाः प्रिये ।
शक्तिस्तु मातृका ज्ञेया सा च ज्ञेया शिवात्मिका ॥ इति ।

"षट्त्रिंशत्तत्त्वप्रकाशिकाऽनाहतपरमशिवस्वरूपा संविदेव मातृका" इत्युक्तम् ऋजुविमर्शिन्याम्"[3] ।

## वाक्चतुष्टयरूपाया मातृकायाः स्वरूपम्

"वाक्चतुष्टयोदयविरामप्रथासु स्वरः प्रथते" (सू० ७) इत्यादिभिर्वातूलनाथोक्तसूत्रैः मातृकाया वाक्चतुष्टयरूपेण वर्णनं कृतम् । तच्च अनाहतहतोत्तीर्णा परावाक्, अनाहतहता पश्यन्ती, अनाहता मध्यमा, हता च वैखरी, एवञ्च परावागात्मानाहतेत्यत्रानाहतपदेन अनाहतहतोत्तीर्णाऽवस्थैवाभिप्रेता ऋजुविमर्शिनीकारस्यापि । सा च परावाक् स्वस्वातन्त्र्योल्लासस्पन्दादेकाऽप्यनेकधा वितता भवति । ततश्च वर्णाम्बिकायाः पश्यन्तीरूपमभिव्यक्तं भवति । तच्चैकादशधा विभज्यते । तथा हि—अकारस्य शिवरूपस्य वामा-ज्येष्ठा-रौद्रयम्बिकाख्यकलाचतुष्टयं तत्समष्टिरूपमकार इति मिलित्वा पञ्चकम्, शक्तिरूपस्य हकारस्य इच्छाज्ञानक्रियाशान्ताख्यकलाचतुष्टयं तत्समष्टिरूपेण

---

१. सौ० सु० १।६; २. तन्त्रा० ३।६७; ३. ऋ० वि० पृ० ९ ।

हकारेण सह पञ्चकम्। अनया रीत्या शिवशक्तिभ्यां द्वाभ्यां वर्णाभ्यामाद्यन्ताभ्यां दशकं जातम्। तयोः परस्परं बीजाङ्कुरन्यायेन सामरस्यादेकमित्येकादशधा पश्यन्ती। निरूपितं चैतत्-कामकलाविलासे[1], योगिनीहृदयदीपिकादौ च[2]। सौभाग्यसुधोदयेऽपि पश्यन्त्याः स्वरूपमुक्तम्—

एकाऽप्येकादशधा जाता माता परैव पश्यन्ती।
पश्यति सर्वं स्वात्मनि करणानां सरणिमपि यदुत्तीर्णा।
तेनेयं पश्यन्तीत्युत्तीर्णेत्यप्युदीर्यते माता[3]॥

इतः परं पश्यन्त्या अनाहतात्मा नादनवकमयी मध्यमा वाग् भवति।

**तत्र नादनवकं च—**

शून्यः स्पर्शस्तथा नादो ध्वनिर्बिन्दुस्तथैव च।
शक्तिबीजाक्षरं चैवेत्यष्टधाऽनाहतः स्मृतः॥

इति सङ्केतपद्धतिवचनाद् विकृतनादा इमे शून्यादयोऽष्टौ, तत्समष्टिरूपं नवममित्येवं नादनवकं बोध्यम्, यतश्चेयं पश्यन्तीव न केवलमुत्तीर्णा, नाऽपि बहिः स्फुटतरनिखिलावयवा; किन्तु हृदयदेशस्था मध्यगता इति मध्यमशब्देनाभिलप्या। ततश्च नवनादात्मिकया मध्यमया नववर्णात्मिका वैखरीवागभिव्यक्ता भवति। वै = निश्चयेन स्पष्टतरत्वात् खं कर्णविवरवर्तिनभोरूपश्रोत्रेन्द्रियं राति गच्छतीति वैखरी इत्येवमस्य पदस्य निरुक्तिर्दर्शिता[4]।

## व्याकरणदर्शनाभिमता वाक्चतुष्टयरूपा मातृका

व्याकरणदर्शने महाभाष्ये महामुनिना पतञ्जलिना वाक्चतुष्टयी ऋग्वेदप्रमाणसनाथिता प्रत्यपादि। तथा हि—

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहायां त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति[5]॥

यद्यपि भाष्यकारेण चत्वारि पदजातानि नामाख्यातोपसर्गनिपातश्चेत्येवं व्याचक्षाणेन परा-पश्यन्तीप्रभृतीनां चर्चा न कृता। तथापि गुहायां त्रीणि निहितानि नेङ्गयन्ति, न चेष्टन्ते, न निमिषन्तीत्यर्थ इत्येवं व्याख्यानेनेमाश्चतस्रो वाचो भाष्यकारस्याप्यभिमता इत्यवगन्तव्यम्।

---

१. कामकलाविलासे—श्लो० २३-२४, पृ० ४३; २. योगिनीहृदयदीपिका—पृ० १७०।
३. सौ० सु० पृ० ३०७।
४. वरिवस्यारहस्यप्रकाशे (पृ० १७) सर्वोऽयं विषयः प्रपञ्चितः।
५. म० भा० पस्पशा० पृ० ३२।

व्याख्यातं चोद्द्योतकारेण श्रीमता नागोजिभट्टेन तथैव[1]।

अथ च वैयाकरणसिद्धान्तलघुमञ्जूषायामपि श्रीनागोजिभट्टेन एताश्चतस्रो वाचो व्याख्याताः सन्ति। तथा हि समस्तस्य जगत उपादानभूतं बिन्दुतत्त्वमेकम्, तच्च सर्वगतमपि प्राणिनां मूलाधारे संस्कृतपवनचलनेनाभिव्यज्यते। ज्ञातस्यार्थस्य विवक्षां कुर्वतः पुरुषस्येच्छया प्रयत्नो जायते, तेन प्रयत्नेन योग एव मूलाधारस्थपवनस्य संस्कारः, तेनाभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठं भवति, अतः स्पन्दरहितं परावागित्युच्यते। तदेव नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्तं मनोविषयः 'पश्यन्ती' इत्युच्यते। एतद्द्वयं सूक्ष्मतमसूक्ष्मतरमीश्वराधिदैवं योगिनां समाधौ निर्विकल्पक-सविकल्पकज्ञान-विषय इत्युच्यते। ततो हृदयपर्यन्तमागच्छता तेन वायुना हृदयदेशेऽभिव्यक्तं तत्तदर्थ-विशेष-तत्तच्छब्दविशेषोल्लेखिन्या बुद्ध्या विषयीकृता हिरण्यगर्भदेवत्या परश्रोत्रग्रहणा-योग्यत्वेन सूक्ष्मा 'मध्यमावाग्' इत्युच्यते। स्वयं तु कर्णपिधाने सूक्ष्मतरवाय्वभिघातेन उपांशुशब्दप्रयोगे च श्रूयमाणा सा। एतदवस्थात्रयमपि सूक्ष्मतम-सूक्ष्मतर-सूक्ष्मप्रणव-रूपम्।

सैव चास्यपर्यन्तमागच्छता तेन वायुना कण्ठदेशं गत्वा मूर्धानमाहत्य परावृत्य तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयोग्या विराडधिदेवत्या 'वैखरीवाग्' इत्युच्यते। प्रणव एव व्यानोदानाभ्यां सह वैखरीरूपं प्रतिपद्यते। अत एव हरिणा व्याकरणस्य त्रिविधा वाग्विषय इत्युक्तम्। तथा हि—

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्[2]॥ इति।

## मातृकावर्गविमर्शः

वर्णसंघातरूपामाकृतिमनुभवन्तीयं मातृका देवी बीजयोन्यात्मना[3] विभक्ता सप्तवर्गेषु अष्टवर्गेषु नववर्गेषु वाऽऽत्मानं प्रसारयतीति तेषु तेषु शास्त्रेषु निर्णीतमस्ति। तत्र प्रपञ्चसारे—"अकचटतपयाद्यैः सप्तभिर्वर्णवर्गैः" इति प्रथमे मङ्गलश्लोके सप्त-वर्गात्मनोक्ता। नित्याषोडशिकार्णवे शैवसिद्धान्तागमेषु चाष्टवर्गात्मना प्रतिपादिताऽ-स्ति। मालिनीविजये तु "नवसु वर्णेषु विराजमाना मातृका" इति वर्णितमस्ति[4]। सङ्केतपद्धति प्रमाणयद्भिः शिवानन्द-विद्यानन्दामृतानन्दादिभिराचार्यैरपि स्वस्वग्रन्थेषु "अष्टवर्गात्मना नववर्गात्मना चावस्थितेयं मातृकादेवी" इत्युक्तम्।

---

१. वै० सि० ल० म० शक्त्याश्रयनिरू० पृ० १४७-४८।

२. वा० प० १।१४४।

३. बीजयोन्यात्मकाद् भेदाद् द्विधा बीजं स्वरा मताः। कादिभिश्च स्मृता योनिः। (मा० वि० ३।१०-११)।

४. मालिनीविजयोत्तरे—३।११।

अत्रायमभिसन्धिः—तत्र तत्र तन्त्रग्रन्थेषु सप्तमातरः प्रसिद्धा एव, सिद्धान्तशिखामणौ मातृतन्त्राणि प्रसिद्धानि। अतः सप्तमातृकामाश्रित्य सप्तवर्गात्मिका मातृका तान्त्रिकाचार्यैरभ्युपेता। पुनश्च महालक्ष्म्यास्तत्र परिगणनेन नित्याषोडशिकार्णवेऽष्टवर्गात्मिकायास्तस्याः स्वीकारः प्रचलितः।

## मातृकावर्णविमर्शः

मातृकाया वर्गसंख्याविषये यथा मतभेदो वर्तते, तथैव वर्णसंख्याविषयेऽपि मतभेदः। तथा हि—"सप्तचत्वारिंशद्वर्णात्मिका वैखरीवाक्" इत्युक्तं सङ्केतपद्धतौ। तत्र च "दश पञ्च च बिन्द्वन्ताः स्वरा मताः"[1] इति सौभाग्यसुधोदयवचनमाश्रित्य पञ्चदश स्वरा गणिताः, ततश्च पञ्चविंशतिः कादिस्पर्शाः, यरलवशषसाश्चेति सप्त, मिलित्वा सप्तचत्वारिंशद् वर्णा भवन्ति वैखर्यां वाचि। अस्मिन् मतेऽवतरन्ति कतिपये सन्देहाः। यथा—अकारवद् हकारस्यापि तत्र परिगणनं कथं न? किं चैकादशधाभिन्नायां पश्यन्त्यां वाचि हकारस्येवाकारस्यापि गणना क्रियते? तत्राकारस्य परिगणनं मा भून्नाम, क्षकारलकारयोस्समावेशे नववर्गात्मिका कथं भवति? स्वरेषु अनुस्वारवद् विसर्गस्यापि ग्रहणं कथं न? इत्यादिः। अर्थरत्नावलीमनुसृत्य सप्तषष्टिर्वर्णाः प्रोक्ताः। तथा हि द्वाविंशतिः स्वराः, पञ्चविंशतिः स्पर्शाः, दशधा व्यापकाः, यमाश्चत्वारः, जिह्वामूलीयोपध्मानीयौ द्वौ, अनुस्वारविसर्गौ, कलानादौ चेत्येवमेषां सङ्कलनया सप्तषष्टिर्वर्णा आयाताः। सङ्केतपद्धत्यनुरोधेन वैखरीवाग् हतनामधेया, मध्यमाऽनाहतनामा, पश्यन्ती चोत्तीर्णा इत्युच्यते।

शैवतन्त्रेषु पञ्चाशदक्षरा मातृका प्रोक्ता, सेयं पञ्चाशद्वर्णात्मिका मातृका अष्टवर्गात्मिका भवति, तथा हि अष्टवर्गा अकचटतपयशाः। अकारादयः षोडश स्वराः प्रथमवर्गः, कादयः पञ्च वर्णा द्वितीयवर्गः, चादयः पञ्च वर्णास्तृतीयवर्गः, टादयः पञ्च चतुर्थः, तादयः पञ्च पञ्चमः, पादयः पञ्च षष्ठः, यादयश्चत्वार सप्तमः, शादयः पञ्च अष्टमः, अनया रीत्या 'अष्टवर्गात्मिका भगवती मातृका त्रिपुरसुन्दरी'[2]। 'एकपञ्चाशदक्षरा मातृका' इति मते शवर्गः षडक्षरः, यवर्गषवर्गयोरपि पञ्चपञ्चवर्णात्मकतैवेति मतविशेषोऽपि निर्दिष्टः सेतुबन्धकृता[3]। शिवानन्दनिर्मितसुभगोदयोक्तमातृकायामपि एतद् दृश्यते[4]।

## मालिनीस्वरूपविमर्शः

मातृका-मालिनी इत्युभौ समानार्थावित्युक्तमेव। तत्र 'नादिफान्ता वर्णमाला मालिनी' इति विशेषः। तत्र त्वयं क्रमः—न ऋ ॠ ऌ ॡ थ च ध ई ण उ ऊ ब क ख ग घ ङ इ अ व भ म ड ढ ठ झ ञ ज र ट प छ ल आ स अः ह ष क्ष म श अं त ए ऐ ओ औ द फ इति[5]।

---

१. सौ० सु० १।१६; २. षडध्वप्रविलापनविधिः, चतुर्थपटले पृ० १०८-२०९।
३. से० ब० पृ० ५१; ४. सु० मा० पृ० २८७; ५. मालिनीविजयः—३।३७-४१।

## भूतलिपिस्वरूपम्

शारदातिलके द्वाचत्वारिंशदक्षरा नववर्गमयी भूतलिपिः प्रोक्ताऽस्ति[1]। तत्रायं वर्णस्थितिक्रमः—

| | |
|---|---|
| अ इ उ ऋ ऌ— | प्रथमो वर्गः। |
| ए ऐ ओ औ — | द्वितीयो वर्गः। |
| ह य व र ल — | तृतीयो वर्गः। |
| ङ क ख घ ग— | चतुर्थो वर्गः। |
| ञ च छ झ ज— | पञ्चमो वर्गः। |
| ण ट ठ ढ ड — | षष्ठो वर्गः। |
| न त थ ध द — | सप्तमो वर्गः। |
| म प फ भ ब — | अष्टमो वर्गः। |
| श ष स — | नवमो वर्गः। |

लिपीनां भूतत्वं नाम—इष्टाविशेषाक्षरविन्यासाभिव्यङ्ग्यत्वम्। तच्च कल्पनामात्रमेव[2]।

## वर्णसंख्याविषये शिक्षाशास्त्रनिष्कर्षः

प्रसङ्गाद् वर्णसंख्याविषये शिक्षाशास्त्रस्यापि सिद्धान्तः प्रस्तूयते। तथा हि—

पाणिनीयशिक्षायां त्रिषष्टिः चतुःषष्टिर्वा वर्णानां संख्या निर्दिष्टाऽस्ति। उक्तञ्च—

त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः।
प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा॥
स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः।
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः॥
अनुस्वारो विसर्गश्च ᳵक ᳶपौ चापि पराश्रयौ।
दुःस्पृष्टश्चेति विज्ञेयो ऌकारः प्लुत एव च[3]॥

अयमाशयः—अ इ उ ऋ एते वर्णा ह्रस्वदीर्घप्लुतभेदेन प्रत्येकं त्रिधा, इति द्वादश। ऌकारस्तु सर्वत्र ह्रस्व एवैकः। ए ऐ ओ औ एते वर्णा दीर्घ-प्लुतभेदेन प्रत्येकं द्विधा इत्यष्टौ, एवमेकविंशतिः स्वराः। स्पेन राजते, स्वस्मिन् रमते वा स्वरः। राजे रमेर्वा औणादिको डप्रत्ययः। अस्योच्चारणे व्यञ्जनस्य साहाय्यं नापेक्ष्यत इत्यर्थः। अतोऽग्रे व्यञ्जनसंख्याविचारः।

व्यज्यते स्वरसाहाय्येनोच्चार्यते यत्तद् व्यञ्जनम्। उक्तं च भाष्यकृता—"न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि सम्भवति"[4] इति।

---

१. शारदातिलकः—७।१-४;
२. चिद्वल्ली, पृ० ५०।
३. पा० शि० श्लो० ३-५;
४. म० भा० १।२।२९।

एते च ककारादिहकारान्ता लोके प्रसिद्धा एव त्रयस्त्रिंशत्संख्याकाः। तत्र कादयो मावसानाः पञ्चविंशतिः स्पर्शाः, ततश्चत्वारोऽन्तःस्था यरलवाः, ततश्चत्वार ऊष्माणः शषसहाः, चत्वारश्च यमा वेद एव प्रसिद्धाः। अनुस्वारो विसर्गः, जिह्वामूलीयः, उपध्मानीय एते चत्वारो वर्णाः, यमसहिता एतेऽयोगवाहपदेनाप्युच्यन्ते[१]। दुःस्पृष्टसंज्ञकश्चैको वर्णः, स च 'अग्निमीळे' इत्यादौ प्रयुज्यमानो डकारस्थानीयो ळकारः। एषां सङ्कलने त्रिषष्टिर्वर्णा भवन्ति। प्लुतऌकारस्यापि योजनया चतुःषष्टि-संख्या भवति। अयं पक्षभेदः प्लुतऌकारस्वीकारहेतुकः।

वर्णरत्नप्रदीपिकाशिक्षायामपि[२] त्रिषष्टिर्वर्णाः प्रोक्ताः। तत्र प्लुतऌकारस्य निर्देशो नास्ति, रङ्गवर्णस्यापि निर्देशो न वर्तते। षोडशश्लोकीशिक्षायामपि[३] त्रिषष्टिरेव वर्णाः परिसंख्याताः। ते च द्वाविंशतिः स्वराः, त्रयस्त्रिंशद् व्यञ्जनानि, चत्वारो यमाः, अनुस्वार-विसर्ग-जिह्वामूलीयोपध्मानीयाश्च। अत्र स्वराणां द्वाविंशतिसंख्याकथनेन दीर्घऌकारस्य स्वीकार एतन्मते नास्तीति प्रतीयते। गौतमीयशिक्षायां[४] त्रयस्त्रिंशद् व्यञ्जनानि चत्वारो यमाश्च निर्दिष्टाः, स्वराणां निर्देशेऽपि संख्या न निर्दिष्टा, रङ्गा-भिधोऽपि वर्णो नात्र निर्दिष्टः। तथापि अप्रतिषिद्धं परमतमनुमतमिति नियमेन पाणिनीयादिशिक्षावदेव संख्याविषये व्यवस्था ज्ञातव्या।

स्वराष्टकशिक्षाया[५]मष्टौ स्वरा उक्ताः, व्यञ्जनानां निर्देशेऽपि संख्या न निर्दिष्टा, अन्ते च प्रत्याहारसूत्राणि लिखितानि। तेन ज्ञायते यत् पाणिनीयवर्णसंख्याविषय एव अस्या अपि अनुमतिरिति।

याज्ञवल्क्यशिक्षायां[६] स्वराः, स्पर्शाः, अन्तःस्थाः, ऊष्माणः, इत्येवंप्रकारेण वर्णानां निर्देशः कृतोऽस्ति। ततश्च अनुस्वार-जिह्वामूलीयोपध्मानीयनासिक्यानुनासिक्य-रङ्गा यमाश्चापि सन्ति प्रतिपादिताः; परन्तु सङ्कलनं कृत्वा संख्या नोक्ता। अस्यां स्थितौ "अप्रतिसिद्धं परमतमनुमतं भवति" इति न्यायेन अष्टषष्टिर्वर्णा एतन्मते वक्तुं शक्यन्ते। तथा हि—दीर्घऌकारस्य संग्रहेण त्रयोविंशतिः स्वराः, त्रयस्त्रिंशत् स्पर्शान्तःस्थोष्माणः, विसर्ग-जिह्वामूलीयोपध्मानीय-नासिक्यानुनासिक्यरङ्गा इति षट्, चत्वारो यमाः, ह्रस्वो दीर्घश्चेति द्वावनुस्वारौ, एते सङ्कलिताः सन्तोऽष्टषष्टि-र्भवन्ति।

लोमशी-पाराशरी-लघ्वमोघानन्दिनीशिक्षासु ह्रस्व-दीर्घभेदेनानुस्वारस्य द्वैविध्यं प्रतिपादितमस्ति। पाणिनीयशिक्षायां तु एकविध एवानुस्वार उक्त इति विवेकः।

---

१. म० भा० पा० सू० 'हयवरट्' (५)।
२. शिक्षासंग्रहः (व० र० प्र० शि०);
३. तत्रैव (षो० श्लो० शि०)।
४. तत्रैव (गौ० शि०);
५. तत्रैव (स्वराष्टक०)।
६. तत्रैव (या० व० शि०)।

एवमेव वाजसनेयप्रातिशाख्ये, तैत्तिरीयप्रातिशाख्ये, ऋक्प्रातिशाख्ये, अग्निपुराणादौ च वर्णानां स्वरूपस्य संख्यायाश्च विषये भूयान् विचारः कृतोऽस्ति, तत्र तत्र स द्रष्टव्यः। अत्रेदमवधातव्यम्—वर्णानां स्वरूपसंख्यादिविषये योऽयं विरोधो दृश्यते, तत्रेदं समाधानं सामान्यतो ज्ञातव्यं यत् स्थानादिभेदेन स्थानादीनामन्यान्यरूपेण साङ्कर्येण विद्यमाना अनन्ता वर्णाः, न तान् साकल्येन कश्चिदपि निश्चेतुं शक्नोति। न हि सर्वे वर्णाः सर्वत्रैव भाषासु वेदेषु वा प्रयुज्यन्ते। अतः शिक्षादयोऽपि भाषाविशेषशाखाविशेषविषयका एव, न तु भाषासामान्यविषयका वेदसामान्यविषयका वा इति स्वीकार्यम्। ये च वर्णा यत्र न निर्दिष्टाः, ते तन्मते सर्वथा न सन्तीति न मन्तव्यम्; अपि तु तच्छाखायामनुपयुक्तत्वान्न निर्दिष्टा इत्येव ज्ञातव्यम्।

इदमपि ध्येयं यदद्यत्वे भाषायां क़-ख़-ज़-फ़-ड़-ढ़ इत्येवमादयो बहवोऽपभ्रष्टा वर्णा उच्चार्यन्ते, तेषां साधुत्वमत्र संस्कृतवाङ्मये नास्ति, तदुच्चारणेन पुण्यावाप्तिर्न भवति इत्येव तात्पर्यम्, अर्थबोधने तद्घटितवाक्यानां सामर्थ्यं भवतु नाम, न ततः काऽपि हानिः।

## वर्णाभिव्यक्तिप्रकारः

वर्णानामभिव्यक्तिप्रक्रिया विस्तरेण तन्त्रालोके तृतीयाह्निके, सौभाग्यसुधोदये, परापञ्चाशिकायां च संक्षेपेणोपपादिताऽस्ति। योगिनीहृदयाध्ययनेन ज्ञायते यत् तन्त्रसद्भावेऽपि वाक्चतुष्टयपद्धत्यैव वर्णाभिव्यक्तिप्रक्रिया प्रतिपादिताऽस्ति। शिवसूत्रविमर्शिनी, ऋजुविमर्शिनी, तन्त्रालोकविवेकधृतादौ च वर्णविकासक्रमो निर्दिष्टोऽस्ति। तत्र तन्त्रालोकविवेके संक्षेपेणैवं निरूपितमस्ति—परैव सूक्ष्मा कुण्डलिनी शक्तिः शिवेन सह परस्परं सामरस्यरूपं संघट्टमासाद्योत्थिता सती इच्छाज्ञानक्रियास्वरूपतामापाद्य रौद्रीत्वमुन्मेषयन्ती, शृङ्गाटकाकारतामम्बिकात्वमाश्रयमाणा, उकारात्मकशशाङ्कशकलाकारतां ज्येष्ठात्वमधितिष्ठन्ती च सांशबिन्दूदितकालाग्निरुद्ररेफात्मकबिन्दुविश्रान्तस्पष्टरेखाकारतामाभासयति, एवमाद्यवर्णशरीरमुल्लासयतीति[1]। अत्रार्थे—

> अकारस्य शिरो रौद्री वक्त्रं वामा प्रकीर्तिता।
> अम्बिका बाहुरित्युक्ता ज्येष्ठा चैवायुधं स्मृता॥

इति च प्रमाणपद्यं तत्रोपस्थापितम्[2]।

योगिनीहृदये परावागम्बिकारूपा, पश्यन्ती वामारूपेच्छाशक्तिः, मध्यमा ज्येष्ठारूपा ज्ञानशक्तिः, वैखरी रौद्रीरूपा क्रियाशक्तिश्च वर्णितास्ति[3]। एवं शक्तेरुदरगतेन चतुष्कलात्मना बिन्दुनाऽनुत्तरादिमुखेन नववर्गकः सन्तानः प्रजायते।

---

१. तन्त्रा० ३।६७, पृ० ७७; २. तत्रैव—पृ० ८०।
३. योगिनीहृदये—१।३६-४०।

### पाणिनीयशिक्षासम्मतो वर्णोत्पत्तिप्रकारः

आत्मा बुद्धया समेत्यर्थान् मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।
वर्णान् जनयते तेषां विभागः पञ्चधा स्मृतः[1]॥

इति पाणिनीयशिक्षायामुक्तम्। अयं भावः—आत्मा = अन्तःकरणं संस्काररूपेण स्वगतानर्थान् बुद्धया स्ववृत्त्या समेत्य एकबुद्धिविषयान् कृत्वा तद्बोधनेच्छया मनो युक्तं करोति, तदिच्छावन्मनः कायाग्निमभिहन्ति, स कायाग्निः सोदीर्णः, स मारुत उदीर्णः, ऊर्ध्वं प्रेरित इत्यादिस्तदर्थः।

एवं च शब्दप्रयोगेच्छयोत्पन्नयत्नाभिहताग्निना नाभिप्रदेशात् प्रेरितो वायुर्वेगान्मूर्धपर्यन्तं गत्वा प्रतिनिवृत्तो वक्त्रं प्राप्य आभ्यन्तरयत्नसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्य वर्णानभिव्यनक्ति। स्पष्टं चैतत् लघुशब्देन्दुशेखरे[2]।

### तन्त्रशास्त्रस्य वैदिकत्वावैदिकत्वविमर्शः

तान्त्रिक-वैदिकसिद्धान्तयोर्वर्तते बहुविधं वैभिन्न्यम्। तन्त्रेषु स्त्रीशूद्रादीनामधिकारोऽस्ति। वेदाध्ययनादिषु तु नास्ति तेषामधिकारः। वाक्चतुष्टयात्मकस्य विशेषतः पराख्यवाग्ब्रह्मण उपासनं षडध्वमुखेन जगत्सर्जनप्रलयौ च तन्त्रशास्त्रीयं प्रमुखं वैशिष्ट्यम्। यद्यपि वेदाङ्गभूते व्याकरणागमेऽपि। शब्दब्रह्मणो महिमा उपासना च तत्र तत्र वर्णितौ स्तः। तथा च तत्प्रतिपादिका श्रुतिरपि "चत्वारि वाक्परिमिता पदानि"[3] इत्यादिका। अथ च—"अकारः सर्ववर्णाग्र्यः", "अनयोः सामरस्यं तत्परस्मिन्नहमिस्फुटम्" इत्यादि संकेतपद्धतिव्याख्यातोऽर्थः बहुत्र श्रुतिष्वपि उपलभ्यते। तथा हि—"अकारो वै सर्वा वाक्",[4] "वाचीमा विश्वा भुवनान्यर्पिता",[5] "वागक्षरं प्रथमजा ऋतस्य,"[6] "अनाहतशीर्ष्णो वाग् जुषाणा सोमस्य तृप्यतु"[7] इत्यादीनि आरण्यकब्राह्मणसंहितावचनानि द्रष्टव्यानि। एवं सत्यपि शब्दब्रह्मणः प्रपञ्चो यथा तन्त्रेषु दृश्यते, न तथा वेदेषु तदङ्गेषु च।

भगवतो बुद्धस्य महावीरस्य च समये तिस्रो दृष्टयः प्रचलिता आसन्। ताश्च वेदानुगामिन्यः, वेदविरोधिन्यः, स्वतन्त्राश्चेति, तत्र सौगतानां जैनानां च दृष्टयो वेदविरोधिन्यः, सांख्ययोगपाञ्चरात्रादीनां स्वतन्त्राः, साम्प्रतं तु पाञ्चरात्रिकाः शैवाश्च वेदमनुसरत्य एवानुभूयन्ते। स्वतन्त्रा दृष्टयो गच्छता कालेन स्वस्वातन्त्र्यं परिहृत्य वेदप्रामाण्यं भजमाना अभवन्।

---

१. पा० शि० ६, ९; २. ल० श० शे० संज्ञाप्र०।
३. ऋ० १।१६४।४५; ४. ऐ० आ० २।३।६; ५. तै० ब्रा० २।८।८।४।
६. तत्रैव—२।८।८।५; ७. तै० सं० ३।२।५।१।

यद्यपि भारतीये वाङ्मये निगमागमशब्दयोः समानेऽर्थे प्रयोगो बहुत्र दृश्यते। यथा श्रीहरिणा आगमशब्दस्य निगमार्थे प्रयोगः कृतः[१]। पुनश्च परवर्तिकाले शैवरौद्राद्यागमेषु वैष्णवाद्यागमेष्वपि च प्रयुक्तो निगमशब्दः। तन्त्रशब्दोऽपि आगमसमानार्थक एव, वैष्णवाद्यागमेषु लक्ष्मीतन्त्र-पाद्मतन्त्रप्रभृतिग्रन्थदर्शनात्। एवं सत्यपि शैवेषु वैष्णवेषु चागमशब्दः, बौद्धेषु शाक्तेषु च तन्त्रशब्दः प्राचुर्य्येण प्रयुक्तो दृश्यते। अस्तु, अस्यां स्थितौ आगम-तन्त्रयोरनर्थान्तरत्वेऽपि निगमपदाभिधेयापेक्षया वैलक्षण्यमस्त्येव। यद्यपि—

'स्वयं प्रमाणान्येतानि न हातव्यानि हेतुभिः'।

इत्याद्युक्त्या,

सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै[२]॥

इत्याद्युक्त्या चागमादीनामपि प्रामाण्यं वेदतुल्यतां भजते। तथापि भगवता वेदव्यासेन ब्रह्मसूत्रतर्कपादे वेदबाह्यैः बौद्धजैनमतैः सहैतेषां मतानामवैदिकत्वं निरणायि। श्रीशङ्करभगवत्पादैस्तथा व्याख्यातमपि। "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्", "हेतुदर्शनाच्च" इति जैमिनीयं सूत्रद्वयं[३] व्याचक्षाणैः कुमारिलभट्टपादैरपि सांख्य-योग-पाञ्चरात्र-पाशुपत-जैन-सौगतमतानां स्पष्टतयाऽवैदिकत्वं प्रोक्तम्।

यद्यपि परवर्तिकाले यामुनाचार्यप्रभृतिभिः पाञ्चरात्रादितन्त्राणां वैदिकत्वसाधने प्रयासः कृतः। "त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति" इति महिम्नःस्तोत्रदृष्टया श्रीभास्कररायप्रभृतिभिश्च[४] तन्त्राणां स्मृतितुल्यत्वं च प्रसाधितम्। तथापि तेषु तेषु तन्त्रग्रन्थेषु वेदानामवरशासनत्वं दृश्यमानं वेदविरोधं स्पष्टं प्रतिपादयति[५]।

विरुद्धसिद्धान्तकमेतन्मतद्वयं वैदिकं तान्त्रिकं चेति निर्णयन्ति इतिहासरहस्यविदोऽपि। तथा हि—सिन्धुसभ्यताचिह्नानां शिवलिङ्गवृषभयोगिप्रभृतीनां वेदेष्वदर्शनाद् वैदिकसभ्यतातो भिन्ना तत्र काचित् सभ्यताऽऽसीत्। तत एव तान्त्रिक्याः सभ्यताया उद्‌भवो मन्यते। वैदिकसभ्यतयाऽस्याः संक्रमे द्वयोः प्रायेण मिश्रणं समजायत। अस्मिन्नेव संक्रमेऽथर्ववेदे तान्त्रिकं कर्मकाण्डम्, यजुर्वेदे च तान्त्रिकः शिवो रुद्रात्मना प्रतिष्ठितोऽभवत्। वैदिक्यां तु विशिष्टानामेवापरत्र साधारणानामपि जनानां प्रवेशोऽधिकारश्चाभ्युपेयते स्म[६], इति।

---

१. वा० प० १।१३२; २. महाभारतम्, शा० मो० ३४९-६४; ३. जै० सू० १।३।३-४।
४. वरिवस्यारहस्यप्रकाशे—पृ० ७।
५. (क) 'उत्तमाः पञ्चरात्रस्था मध्यमास्तु त्रयीमयाः' (लक्ष्मीतन्त्रम्—२२।३६)।
(ख) 'सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम्' (कुलार्णवे—२।७)।
६. 'अस्यां च पूजायां सर्वजातीनामधिकारः' इत्यादिना सन्दर्भेण सौभाग्यभास्करे एतद् द्रष्टव्यम् (पृ० २२३)।

अत्रायं निष्कर्षः—यद्यपि बौद्धार्हतयोरिव तन्त्रशास्त्रेषु पाञ्चरात्रादिषु सर्वथैव वेदप्रामाण्यं न प्रत्याख्यातम्, तथापि लोकसंग्रहाद्यर्थं क्वचिदंशेषु प्रत्याख्यातमेव। वेद-विरुद्धमप्येतन्मतं भारतीये समाजे समादृतमभूत्। उत्तरे भारते सिद्ध-नाथ-सन्तप्रभृतीनां वाक्येषु, दक्षिणे च भारते आलवारादीनां परम्परासु साम्प्रतमपि तान्त्रिकदृष्टिप्रवाहो निर्बाधं प्रवहत्येव।

यथा ब्रह्मा पूर्वकल्पस्थितान् वेदान् स्मृत्वोपदिशति, तथैव शिव-नारायण-बुद्ध-प्रभृतिभिस्तानि तानि तन्त्राण्यपि ऋषिमुनिपरम्परासु उपदिश्यन्ते। अनेन रूपेण तन्त्रशास्त्रस्यापि वेदवद् अपौरुषेयत्वमेव स्वीक्रियते तन्त्रसम्प्रदायनिष्णातैः। काल-क्रमेण तन्त्रशास्त्रं नानाशाखोपशाखासु विभक्तमभवदिति तन्त्ररहस्यम्।

**तन्त्राणां शाखाभेदाः**

गारुडे भूततन्त्रे च वाग्विधानेषु सर्वतः।
यामले चैकवीरे च नवके त्रिकभेदतः॥
समभेदे च देव्याख्ये दुर्गाख्ये विन्ध्यवासिनि।
चण्डिकाख्ये चतुष्के च स्वयम्भूत्ये महेश्वरे॥
प्राक्प्रतिष्ठितरूपे वा ऋषिमानुषयोजिते।
आयुधे विविधे चैव विद्यापीठेषु सर्वतः॥
सर्वपातालतन्त्रेषु नागेषु द्रामिडेषु च।

इत्येवंप्रकारेण **नेत्रतन्त्रे**[1] भेदा वर्णिताः। तदीयोद्द्योतव्याख्यायाम्—यामल इति ब्रह्मयामल-रुद्रयामलादौ, एकवीर इति परात्रिंशिका-मतत्रिंशिकादौ, नवक इति नवात्म-चक्रादौ, त्रिक इति षडर्धनयेषु, समभेदे चेति समविषमाख्येषु मतनयेषु, देव्याख्ये इति महाघोराजयादिभेदेषु, विन्ध्यवासिनीत्येतदाख्यदेवताप्रतिपादके, चण्डिकाद्ये चतुष्के इति दक्षिणवामस्रोतसि तत्तद्देवताचतुष्टयाराधनप्रतिपादिनि इत्येवं विशदीकृतम्[1]।

अजितागमभूमिकायामुद्धृतपूर्वकारणागमे तु शैवतन्त्रस्य चातुर्विध्यं प्रदर्शितम्, तथा हि—

शैवं चतुर्विधं ज्ञेयं शैवं पाशुपतं तथा।
सोमं लाकुलमित्येते चतुर्भेदाः प्रकीर्तिताः॥

पुनश्च तत्रैव भूमिकायामुद्धृते कामिकागमे गारुड-भैरव-कापाल-पाञ्चरात्र-लाकुल-पाशुपत-बौद्ध-जैनप्रभृतिभेदा वर्णिताः। तथा च—

गारुडं भूततन्त्रं च भैरवं वामतन्त्रकम्।
कापालं पाञ्चरात्रं च लाकुली कुलशास्त्रकम्॥ इत्यादिकम्[2]।

---

१. ने० त० १३।३८-४२।
२. कामिकागमे–१।११४-११६।

पुनश्च अजितागमे क्रियापादे भैरव-पाशुपत-भूततन्त्र-विष्णुतन्त्रादिभेदाना-मुल्लेखो वर्तते। तथा हि—

सिद्धान्ते भूततन्त्रे च वामे स्रोतसि दक्षिणे।
भैरवे च तथान्येषु पशुपाशुपतादिषु॥
विष्णुतन्त्रे च बौद्धे च तथा दिक्पालदर्शने[1]॥ इति।

कुलार्णवे तु तन्त्राणां विविधा भेदा निरूपिताः सन्ति। तथा च—

शैव-वैष्णव-दौर्गार्कगाणपत्येन्दुसम्भवैः।
मन्त्रैर्विशुद्धचित्तस्य कुलज्ञानं प्रकाशते[2]॥ इति।

## तन्त्राणामुत्तमाधमभावविमर्शः

परात्रिंशिकाव्याख्यायामुद्धृतवचनेन तन्त्राणामुत्तराधरभावो द्रष्टव्यः।तथा च—

वेदाच्छैवं ततो वामं ततो दक्षं ततः कुलम्।
ततो मतं ततश्चापि त्रिकं सर्वोत्तमं परम्[3]॥

पुनश्च तत्रैवोद्धतनिशाचरवचनेनापि स भावः प्रदर्शितः। तथा च—

वाममार्गाभिषिक्तोऽपि देशिकः परतत्त्ववित्।
संस्कार्यो भैरवे सोऽपि कुले कौले त्रिकेऽपि सः[4]॥

कुलार्णवतन्त्रोक्तप्रमाणेनापि पूर्वोक्तभावस्य स्फुटाभिव्यक्तिः प्रदर्शिताऽस्ति। तथा च—

सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम्।
वैष्णवादुत्तमं शैवं शैवाद्दक्षिणमुत्तमम्॥
दक्षिणादुत्तमं वामं वामात् सिद्धान्तमुत्तमम्।
सिद्धान्तादुत्तमं कौलं कौलात् परतरं नहि[5]॥ इति।

## तन्त्रीयविभागत्रयस्य विमर्शः

तरतमभावेन स्थितानां तन्त्राणां पुनस्त्रैविध्यं प्रदर्श्यते। तत्र प्रथमः स्रोतोविभागः, द्वितीयः पीठविभागः, तृतीयश्चाम्नायविभाग इति। तत्रापि स्रोतोभेदः पुनस्त्रिविधः। स चेत्थम्—

---

१. अजितागमे—२।२२-२३; २. कुलार्णवे—२।२९।
३. परा० उ० पृ० ९२; ४. तत्रैव।
५. कुला० त० २।७-८।

वामदक्षिणसिद्धान्तस्त्रिविधं शुद्धशैवकम् ।
मुक्तावतारतन्त्रादि शास्त्रं यद् वामशैवकम् ॥
स्वच्छन्दादीनि तन्त्राणि दक्षिणं शैवमुच्यते ।
कामिकादीनि तन्त्राणि सिद्धान्ता इति कीर्तिताः[१] ॥

इति पूर्वकारणागमवचनं तत्र प्रमाणमवगन्तव्यम् । "वामदक्षिणसिद्धान्तभेदत्रयविभेदतः" इति नेत्रतन्त्रापराभिधमृत्युञ्जयभट्टारकवचनमपि भेदत्रये मानम् । शिव एव सदाशिव-भैरव-तुम्बुरुरूपेण सिद्धान्त-वाम-दक्षिणस्रोतसामुपदेशं ददाति, इत्यपि नेत्रतन्त्रतो[२]ऽवगम्यते । सिद्धान्तशिखामणौ तु शैवागमस्य चत्वारो भेदा व्याख्याताः । तद्यथा—

शक्तिप्रधानं वामाख्यं दक्षिणं भैरवात्मकम् ।
सप्तमातृपरं मिश्रं सिद्धान्तं वेदसम्मतम्[३] ॥ इति ।

कारणागमसम्मत्या मिश्राभिधं चतुर्थं भेदं मन्यन्ते तन्त्राचार्याः । अजितागमभूमिकायां कापाल-कालामुख-अघोरादयो वामभेदे, स्वच्छन्दभैरवादिशैवागमानुगतं त्रिकमिति संज्ञितं कश्मीरशैवदर्शनं च दक्षिणभेदे सम्भावितम् । नेत्रतन्त्रोद्द्योतानुसारेण भैरवागमानां दक्षिणस्रोतस्येवान्तर्भावः । कापालादीनि त्रिक्शास्त्रं च शैवागमतो भिन्नान्येव अद्यत्वे । वामदक्षिणमार्गभेदेन तन्त्राणां द्वैविध्यं प्रचलद् दृश्यते ।

### पञ्चस्रोतोविभागविमर्शः

नेत्रतन्त्रे पञ्चस्रोतांसि प्रदर्शितानि[४] । मृगेन्द्रतन्त्रे तानि संख्यातान्यपि—

स्रोतांसि कामिकाद्यूर्ध्वमसिताङ्गादि दक्षिणम् ।
सम्मोहादुत्तरं प्राच्यं त्रोतलादि सुविस्तरम् ॥
आप्यं चण्डासिधारादि चण्डनाथपरिग्रहम्[५] ॥

आप्यमित्यनेनात्र पश्चिमं ग्राह्यम् ।

शैवा रौद्राश्चागमा दशाष्टादशभेदभिन्नाः शिवस्य पञ्चवक्त्रेभ्यो विनिःसृता इत्यजितागमेऽन्यत्र[६] चोक्तम् । तत्राजितागमीयः क्रमः—

---

१. अजितागमभूमिकायाम्, पूर्वकारणागमे—२६।५९-६० ।
२. 'शिवः सदाशिवश्चैव भैरवस्तुम्बुरुस्तथा' इति (नेत्रतन्त्रे—९।११) ।
३. सि० शि० ५।११ ।
४. 'पञ्चस्रोतो विनिर्भिन्नम्' (ने० त० १९।३३) ।
५. मृगेन्द्रागमे चर्यापादे—१।३५-३६ ।
६. (क) मालिनीविजयवार्तिके—पृ० ३६-३८ ।
(ख) तन्त्रालोकविवेके—भा० १, पृ० ३६-४१ ।

(१) ऊर्ध्व(ईशान)मुखोद्भवाः—कामिकं योगजं चिन्त्यं कारणम्, अजितं दीप्तं सूक्ष्मं सहस्रमंशुमत् सुप्रभेदं च।

(२) सद्योजातमुखोद्भवाः —विजयं पारमेशं निश्वासं प्रोद्गीतं मुखबिम्बं च।

(३) वामदेवमुखोद्भवाः —सिद्धं सन्तानं शर्वोक्तं चन्द्रज्ञानं विमलं च।

(४) अघोरमुखोद्भवाः —स्वायम्भुवं वीरं रौरवं मकुटं किरणं च।

(५) तत्पुरुषमुखोद्भवाः —ललितम् आग्नेयं वातुलं च।

रौरवागमप्रथमभागभूमिकायां तु अन्य एव क्रमो दर्शितः—

(१) ईशानमुखोद्भवाः —प्रोद्गीतं ललितं सिद्धं सन्तानं शर्वोक्तं पारमेश्वरं किरणं वातुलं च।

(२) सद्योजातमुखोद्भवाः —कामिकं योगजं चिन्त्यं कारणम् अजितं च।

(३) वामदेवमुखोद्भवाः —दीप्तं सूक्ष्मं साहस्रम् अंशुमत् सुप्रभेदं च।

(४) अघोरमुखोद्भवाः —विजयं निःश्वासं स्वायम्भुवम् अनलं वीरं च।

(५) तत्पुरुषमुखोद्भवाः —रौरवं मकुटं विमलं चन्द्रज्ञानं बिम्बं च।

शतरत्नसंग्रहोल्लेखनीधृतकामिकागमेऽन्यः क्रमो दृश्यते[१]। तथा हि—

सिद्धान्तं गारुडं वामं भूततन्त्रं च भैरवम्।
ऊर्ध्वपूर्वकुबेराप्ययाम्यवक्त्राद् यथाक्रमम्॥ इति।

व्याख्यातं च तत्र—'ऊर्ध्वपूर्वकुबेरवरुणयाम्यसम्बन्धाद् मुक्तिप्रदसिद्धान्त-सर्वविषहरणगारुड-सर्ववशीकरणवाम-भूतग्रहनिवारकभूततन्त्र-शत्रुक्षयकरभैरवसंज्ञकम्'[२] इति।

तन्त्रालोकविवेकधृतश्रीकण्ठ्यामपि[३] दशाष्टादशभेदभिन्नं शिवरुद्राभिधं ज्ञानमूर्ध्वमुखोद्भूतमेवेत्यङ्गीकृतम्। चतुःषष्टिरद्वयप्रधाना भैरवभेदाश्च दक्षिणवक्त्रतो निःसृताः। तत्पुरुषवक्त्रतोऽष्टाविंशतिभेदं गारुडं तन्त्रम्, पश्चिमतो भूततन्त्राणि च निर्गतानि—इत्यादि तत्रोक्तम्।

मृगेन्द्रागमे चर्यापादेऽष्टौ अनुस्रोतांस्यपि उक्तानि[४]। तानि च—शैवम्, मान्त्रेश्वरम्, गाणम्, दिव्यम्, आर्षम्, गौह्यकम्, योगिनीकौलम्, सिद्धकौलं च। योगिनीकौलस्य लक्षणम्—

योगिन्यो लेभिरे ज्ञानं सद्यो योगावभासकम्।
येन तद्योगिनीकौलं नोत्तीर्णं ताभ्य एव तत्॥ इति।

अन्येषामपि लक्षणानि तत एव ज्ञातव्यानि।

---

१. रौरवागमे प्रथमभागे भूमिकायाम्, ११ पृष्ठे।

२. शत० कामिकागमे, पृ० ९।

३. तदीये प्रथमभागे, पृ० ४०-४४;

४. मृगेन्द्रागमे चर्यापादे—१।४०।

### पीठविभागविमर्शः

विद्यापीठ-मन्त्रपीठ-मुद्रापीठ-मण्डलपीठभेदात् पीठश्चतुर्विधः। ब्रह्मयामलवचनाद् इदं ज्ञायते यद् भैरवाष्टकं यामलाष्टकं च विद्यापीठाद् विनिर्गतम्। योगिनीजाल-योगिनीहृदय-मन्त्रमालिनी-महामारी-प्रभृतीनि तन्त्राणि विद्यापीठसम्बद्धानि। वीरभैरव-चण्डभैरव-महाभैरवादयो मुद्रापीठेन संसृष्टाः। स्वच्छन्दोद्योते समुद्धृतसर्ववीरवचनेन चतुष्पीठा संहिता ज्ञायते। तथा हि—

मुद्रामण्डलपीठं तु चतुष्पीठं तथैव च।
विद्यापीठं तथैवेह चतुष्पीठा तु संहिता[1]॥ इति।

भैरवाष्टकं मन्त्रपीठात्मकमित्यपि तत एव ज्ञायते[2]। अर्थरत्नावलीग्रन्थे समुद्धृतेन संकेतपद्धति[3]वचनेनेदं ज्ञायते यद्—ओड्याण-पूर्णगिरि-जालन्धर-कामरूप-पीठानि क्रमश आज्ञापीठ-मन्त्रपीठ-विद्यापीठ-मुद्रापीठतया उक्तानि सन्ति तन्त्रशास्त्रे।

महार्थमञ्जरीपरिमले उद्धृतचरणसूत्रेण पीठचतुष्टयस्यैवं व्याख्यानं कृतमस्ति। तद्यथा—

विद्येति मातृकापीठं तत् पार्थिवमुदाहृतम्।
मण्डलं कुण्डलीपीठं तदाप्यं परिकीर्तितम्॥
मन्त्रसंज्ञं क्रियापीठं तैजसं तत् प्रकीर्तितम्।
ज्ञानपीठं तु मुद्राख्यं तद् वायव्यं सुरेश्वरि॥
परेच्छामुखतो व्योमपीठत्वेनेह नादृतम्।

अत्र हि पीठानां पार्थिवत्वाप्यत्वादिकं प्रतिपादितमस्ति। तन्त्रालोके एकोनत्रिंशाह्निके जयरथेन "इह विद्यामन्त्रमुद्रामण्डलात्मतया चतुष्पीठं तावच्छास्त्रम्। तत्र मन्त्रमुद्रात्मनः पीठद्वयस्य सम्प्रदाय उक्तः। इदानीमत्रैवावशिष्टस्य विद्यामण्डलात्मनोऽप्यस्य सम्प्रदायं निरूपयति" इत्यवतरणिका प्रोक्ता[4]।

अग्रे च सप्तत्रिंशाह्निके शास्त्रस्य पञ्चस्रोतोमयत्वमभिधाय पीठचतुष्टयात्मकत्वं निरूपितम्। उपसंहृतं चेत्थम्—

विद्यापीठप्रधानं च सिद्धयोगीश्वरीमतम्।
तस्यापि परमं सारं मालिनीविजयोत्तरम्[5]॥

स्रोतोविभागवत् पीठविभागोऽपि आगमशास्त्रे स्वीक्रियत इति निष्कर्षः।

---

१. 'चतुष्पीठं महातन्त्रं चतुष्टयफलोदयम्' (स्व० १-५)।

२. स्वच्छन्दोद्योते—भा० १, पृ० १०।

३. अत्र २२० पृष्ठतः २२२ पृष्ठं यावद् द्रष्टव्यम्; ४. तन्त्रा० २९।११४ पृष्ठम्।

५. तन्त्रा० ३७।२४-२५।

## आम्नायविभागविमर्शः

पूर्वोक्तविभागद्वयापेक्षया आम्नायविभागोऽतिशयेन प्रसिद्धः। एते आम्नायाः शिवस्य तत्पुरुष-सद्योजात-अघोर-वामदेव-ईशानाख्येभ्यः पञ्चवक्त्रेभ्यो विनिर्गताः क्रमेण पूर्व-पश्चिम-दक्षिणोत्तरोर्ध्वाम्नायपदैः सम्बोध्यमानाः सन्ति[१]। तन्त्रालोकेऽपि स एव दिग्विभागक्रमो निर्दिष्टोऽस्ति[२]।

कुलार्णवे कश्चन विशेषोऽत्रोक्तः[३]। तथा च—

मन्त्रयोगं विदुः पूर्वं भक्तियोगं च दक्षिणम्।
पश्चिमं कर्मयोगं च ज्ञानयोगं तथोत्तरम्॥
पूर्वाम्नायस्य संकेताश्चतुर्विंशतिरीरिताः।
दक्षिणाम्नायसंकेताः पञ्चविंशतिरीरिताः॥
पश्चिमाम्नायसंकेताः द्वात्रिंशत् समुदाहृताः।
विदुः षट्त्रिंशदाम्नाये संकेताः श्रीमदुत्तरे॥
ऊर्ध्वाम्नायस्य चैतानि न सन्ति कुलनायिके।

नित्याषोडशिकार्णवे तु 'चतुराज्ञाकोशभृताम्' इत्यत्र चत्वार एवाम्नायाः स्वीकृताः[४]।

"ऊर्ध्वाम्नायस्यापि चतुःपदमुपलक्षकम्" इति वदता श्रीभास्कररायेण तु पञ्चाम्नाया अत्र स्वीकृताः सन्ति[५]; किन्तु वरिवस्यारहस्यप्रकाशे तेनापि "अन्वयाः प्राग्दक्षिणपश्चिमान्वयाः उत्तरान्वयश्च। एत एव समयपदेनाम्नायपदेन च कथ्यन्ते" इत्येवंरूपेण चत्वार एवाम्नायाः प्रतिपादिताः[६]। 'रसाम्नायमहसा' इत्युक्त्या षडाम्नायाः सूच्यन्ते सौन्दर्यलहर्य्याम्[७]। तत्र श्रीकैवल्याश्रमेण "रसाम्नायाः षडाम्नायाः पूर्वदक्षिणपश्चिमोत्तरोर्ध्वानुत्तराः" इत्येवं व्याख्याता[८] अपि ते। तन्त्रालोकेऽपि षट् स्रोतांसि प्रतिपादितानि। तथा हि—

ईश ऊर्ध्वं प्रकाशत्वात् पूर्वं वक्त्रं प्रसारि यत्।
पुरुषो दक्षिणा चण्डो वामा वामस्तु सौम्यकः॥
पराङ्मुखतया सद्यः पश्चिमा परिभाष्यते।
पातालवक्त्रमधरमप्रकाशतया स्थितेः॥ इति।

---

१. मम पञ्चमुखेभ्यश्च पञ्चाम्नायाः समुद्गताः।
पूर्वश्च पश्चिमश्चैव दक्षिणश्चोत्तरस्तथा॥
ऊर्ध्वाम्नायश्च पञ्चैते मोक्षमार्गाः प्रकीर्तिताः। (कुलार्णवे—३।७)

२. तन्त्रालोके—१५।२०४-२०५; ३. कुलार्णवे—३।४२-४५।

४. नित्याषोडशिका० १।१२; ५. से० पृ० २०।

६. व० प्र० पृ० २३।

७. सौ० ल० १।१०; ८. तत्रैव—पृ० २३, टीकायाम्।

विवेककारेण व्याख्यातमपि यद् यस्मादीशः प्रकाशैकरूपत्वादूर्ध्वा दिगुच्यते, तत्पुरुषः प्रकाशौन्मुख्येन प्रसरणात् पूर्वा, अघोरः प्रसृतप्रकाशोद्रेकानुकूल्याद् दक्षिणा, वामदेवस्तत्प्रातिकूल्याद् मेयेन्दुसंस्पर्शप्रधाना वामा, उत्तरा, सद्योजातः प्रकाशवैमुख्यात् पश्चिमा प्रकाशसंस्पर्शायोग्यत्वादधरा चेति[1]।

नेत्रतन्त्रोद्द्योतेऽपि षट्स्रोतांसि उक्तानि । तथा हि—

गारुडे मातृतन्त्रे च वामे स्रोतसि दक्षिणे ।
ज्येष्ठे चण्डासिधारे च प्रत्यक्षफलदा क्रिया ॥

अयमाशयः—गारुडे पूर्वस्मिन्, मातृतन्त्रादौ पश्चिमे, जयादित्ये वामे, भैरवशास्त्रे च दक्षिणे, चण्डासिधारादावूर्ध्वे, ज्येष्ठे च मतकुलादौ रहस्ये स्रोतसि इति[2]। अनया रीत्या षडाम्नायविभागोऽपि प्राचीन एव ज्ञायते ।

### आम्नायविभागे त्रिपुरोपासनायाः स्थानम्

इत्थमत्र शैवानां शाक्तानां च तन्त्राणां त्रिस्रोतोविभागः, पञ्चस्रोतोविभागः, अनुस्रोतोविभागः, पीठविभागः, चतुःपञ्चषडाम्नायविभागश्च प्रतिपादितः । तत्र स्रोतोविभागः प्राधान्येन शैवानाम्, पीठविभागो भैरवागमानां कौलागमानां च, आम्नायविभागश्च शाक्तागमानामभिमत इति प्रख्यातिः ।

त्रिपुराविद्यायाः चतुराम्नायसाधारण्येऽपि दक्षिणपक्षपातित्वमिति व्याचष्टे श्रीविद्यानन्दः[3]।

अमृतानन्देनापि एषोऽर्थः सम्मन्यते[4]। दक्षिणपक्षपातित्वकथनेनास्या भैरवागमानुगामित्वं प्रतीयते ।

त्रिपुरसुन्दरीदण्डके श्रीदीपकनाथः त्रिपुराविद्याया वाममार्गसेव्यत्वमपि व्याचख्यौ । एवं च दक्षिणेन वामेन चोभाभ्यामपि मार्गाभ्यां प्रवृत्तिवैचित्र्येण महादेवी त्रिपुरसुन्दरी समुपास्यते भक्तजनैः । तत्र वाममार्गः कौलानाम्, दक्षिणश्चान्येषामिति विवेकः ।

### श्रीत्रिपुरोपासनायां मतत्रयम्

सौन्दर्यलहरीं व्याचक्षाणेन श्रीलक्ष्मीधरेण तु त्रिपुरोपासनायां मतत्रयमुपदिष्टम्—कौलमतम्, मिश्रमतम्, समयिमतं च[5]। तत्र चतुष्षष्ट्यागमाः कौलानां नित्याषोडशिकार्णवे प्रतिपादिताः[6]। मिश्रमतेऽष्टौ आगमाश्चन्द्रकलाज्योत्स्नावतीप्रभृतयः । समयिनां तु

---

१. तन्त्रालोके—१५।२०४-२०६, पृ० १०२ । २. नेत्रतन्त्रोद्द्योते—१६।७६ ।
३. अर्थं० पृ० ४१; ४. दी० पृ० ११० ।
५. सौ० ल० पृ० १३७-१४१; ६. प्रथमपटले १४-२१ श्लो० ।

अहमित्येकमद्वैतं यत्प्रकारात्मविभ्रमः ।
अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ॥
हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः ।
अनयोः सामरस्यं यत् परस्मिन्नहमि स्फुटम्[१] ॥

इदमेव तत्त्वमहन्तेदन्तेति पदाभ्यां सर्वत्र शास्त्रे व्यपदिश्यते । एषा वर्णमातृका-चक्रोक्तिः अक्षमालाक्रमेण रहस्यसम्पादयित्री सती नानाचक्रसम्पादिका भवतीति जानन्त्येव सर्वे आगमविदः । उक्तञ्च--

अकारः प्रथमं देवि क्षकारोऽन्त्यस्ततः परम् ।
अक्षमातेति विख्याता मातृका वर्णरूपिणी[२] ॥

इदमेव तत्त्वमक्षरपदेनापि व्यवह्रियते, भगवद्गीतायां ब्रह्मापरपर्यायतयेदमेव उक्तमस्ति । तथा हि—

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः[३] ॥ इति ।

एषा वर्णमातृका स्वान्तर्गतानन्ताक्षरराशिमहामन्त्रवीर्यपूर्णाहन्तारूपिणी, प्रकाशानन्दसारा बिन्दुमयसमष्टिरूपलिप्यक्षररूपिणी कामकला नाम महात्रिपुरसुन्दरी परमयोगिभिरनिशमनुस्त्रियते । यतश्च परमा शक्तिरेकविधैव सती बीजोच्छूनदशायां ज्ञानक्रियेच्छारूपत्रयबिन्दुरूपेणोह्यमाना त्रैविध्यं गता त्रिपुरा । एवं त्रिचक्र-त्रिशक्ति-त्रिधाम-त्रिबीज-त्रितत्त्व-त्रिगुण-त्रिकोणादिभेदत्रयाविर्भावेण त्रिवृत्करण-रचना-वैचित्री-चतुरा-त्रैविध्येन सर्वाध्वव्यापिनो त्रिपुरा महती सुन्दरीति महात्रिपुरसुन्दरीति विख्याता[४] ।

सा चेयं सर्वचक्र-सर्वतन्त्र-सर्वशक्तीनां जनयित्री, वर्णसंघट्टशरीरा सती शब्द-राशिभूता त्रिपुरा, मोहिनी, कला, कालिकेत्यादिभिः परःसहस्रैः शब्दैर्व्यपदिश्यमाना परावागात्मिका ज्येष्ठा-रौद्रयम्बिकाख्यशक्तिप्रसरसंभेदवैचित्र्येण सर्ववर्णोदयकारणभूता सप्तकोटिमहामन्त्राणामुत्पादयित्री, भट्टारकपरमशिवस्वरूपा, षट्त्रिंशत्तत्त्वप्रसरणहेतुभूता, संविदेव मातृकापदेन सर्वत्र प्रख्यातिं प्राप्ताऽस्ति । उक्तञ्च—

सर्वे वर्णात्मका मन्त्रास्ते च शक्त्यात्मकाः प्रिये ।
शक्तिस्तु मातृका ज्ञेया सा च ज्ञेया शिवात्मिका[५] ॥ इति ।

काऽपि साधना, कोऽप्युपायो मन्त्रतत्त्वरूपाया मातृकाया ज्ञानमन्तरा भवितुं नार्हति । अतो वर्णमातृकायाः स्वरूपज्ञानाय प्रयुक्तानि चक्राणि रुद्रयामलतन्त्रेऽत्र पूर्वमेव निरूपितानि सन्ति । उक्तञ्च—

१. वरिवस्यारहस्ये, पृ० ५२; २. परात्रिंशिका--पृ० १९४; ३. श्रीमद्भगवद्गीता--८।३ ।
४. नित्याषोडशिका० २।६-७; ५. तन्त्रसद्भावे द्रष्टव्यम् ।

अज्ञात्वा मन्त्रतत्त्वानि महाविद्यां जपेत्तु यः।
सर्वं तस्य वृथा देवि किं तस्य जपपूजनैः॥
ध्यानावधारणेनैव तथा योगसमाधिना।
वर्णज्ञानं यदा नास्ति किं तस्य जपपूजनैः[१] ॥ इति।

शिवस्य महाकाल्याश्च कण्ठे निबद्धा मुण्डमाला ज्ञानराशेः संकेतभूता, यतो हि सर्वाणि ज्ञानेन्द्रियाणि मुण्ड एव व्यवतिष्ठन्त इत्यपि तन्त्रशास्त्ररहस्यं न विस्मरणीयम्। उक्तञ्च—

मम कण्ठे स्थितं बीजं पञ्चाशद्वर्णमद्भुतम्।
नानावर्णयुतं शुद्धं तन्त्राणां सारमुत्तमम्[२] ॥ इति।

सा चेयं मातृका पञ्चाशत्संख्याकान्, एकपञ्चाशत्संख्याकान्, द्विपञ्चाशत्संख्याकान्, चतुःषष्टिसंख्याकान् वा वर्णान् स्वस्मिन् समावेशयन्ती अनन्तकोटिब्रह्माण्डाधीशानामनन्तब्रह्म-विष्णु-रुद्रादीनां जननी, अकारादिक्षकारान्तबीजरूपा रुद्रयामलग्रन्थस्यास्योपजीव्यभूता संकीर्त्यते।

एवमेवात्र ग्रन्थे गुरुशिष्ययोग्यता, दीक्षाविधिः, पश्वादिभावविचारः, कुण्डलिनीजागरणम्, अकाराद्यक्षरक्रमेण कृते प्रश्ने फलविचारः, षट्चक्रसाधनम्, अष्टाङ्गयोगस्य भेदोपभेदाः नेती-दन्ती-धौती-नेवलीसाधनानि राकिणी-लाकिनी-कामिनीप्रभृतिसाधनानि, नानाविधसिद्धीनां साधनानि चेत्येवंविधा बहवो विषया निरूपिताः सन्ति।

रुद्राणीस्तोत्रमत्रातीवललितं पाठमात्रेणाकर्षकरम्, महाकालस्य स्वरूपज्ञापकं मोक्षावाप्तिकरं चास्ति।

## गुरोर्माहात्म्यम्

गुरोर्माहात्म्यमुद्दिश्य एतत्तन्त्रे प्रथमपटले यदुक्तम्, तत्संक्षिप्तं निर्दिश्यते—

ध्यानं संयोजनं प्रोक्तं मोक्षमात्ममनोलयम्।
गुरोः प्रसादमात्रेण शक्तितोषो महान् भवेत्॥
शक्तिसन्तोषमात्रेण मोक्षमाप्नोति साधकः।
गुरुमूलं जगत्सर्वं गुरुमूलं परन्तपः॥
गुरोः प्रसादमात्रेण मोक्षमाप्नोति सद्वशी।
न लङ्घयेद् गुरोराज्ञामुत्तरं न वदेत् तथा॥
दिवारात्रौ गुरोराज्ञां दासवत् परिपालयेत्।
उक्तानुक्तेषु कार्येषु नोपेक्षां कारयेद् बुधः॥
गुरुं दुष्कृत्य रिपुवन्निर्हरेत् परिवादतः।
अरण्ये निर्जने देशे स भवेद् ब्रह्मराक्षसः[३] ॥

१. कामधेनुतन्त्रे—१।४-५; २. तत्रैव—१।६।
३. रु० या० १।२२२-२२५, २३०-२३१।

गुरुभक्त्या च शक्रत्वमभक्त्या शूकरो भवेत् ।
गुरुभक्तेः परं नास्ति भक्तिशास्त्रेषु सर्वतः[1]॥

पशुभावमात्रस्य जीवस्य व्रतभङ्गादौ प्रायश्चित्तरूपेण गुरुप्रदत्तमन्त्रस्य सहस्राधिकसंख्यया जपः कार्यः । साधकस्य कृते सन्ध्योपासनं पितृतर्पणं नित्यश्राद्धं देवतानां पीठस्य तीर्थस्य च दर्शनमावश्यकम्, गुरोराज्ञापालनं तु सर्वथा कर्तव्यमेव । एतदुक्त्वा भगवत्याः पूजाविधिरुक्तः, गुरोर्लक्षणम्, शिष्यलक्षणं च, स्त्रियो दीक्षादाने युक्ताः, एतत्सर्वं **द्वितीये पटले** द्रष्टव्यम् । ताराचक्रादिविवरणमपि द्वितीयपटलावसाने द्रष्टव्यम् ।

**तृतीये पटले** कालाकालविचारकस्य चक्रस्य वर्णनं भगवत्या कृतम् । कूर्मचक्रस्य, शिवचक्रस्य, विष्णुचक्रस्य, रामचक्रस्य च स्वरूपं सर्वसिद्धिप्रदायकत्वं च विस्तरेण प्रोक्तम् ।

**चतुर्थे पटले** ब्रह्मचक्रस्य वर्णनं कृतम् । अस्य चक्रस्य स्वरूपनिरूपणे 'चतुष्कोणे चतुष्कोणं तन्मध्ये च चतुश्चतुः' इत्येवं संकेतं कृत्वा—

मध्यगेहं वेष्टयित्वा इष्टं मन्दिरमुत्तमम् ।
अष्टकोणे महादेव षोडशस्वरमालिखेत् ॥

इत्यादिक्रमेण चक्राकृतिर्निर्दिष्टा । अग्रे च 'सुखे सुखमवाप्नोति, राज्ये राज्यमवाप्नुयात्' इत्यादिना फलस्यापि संकेतः समीचीनतया कृतः । मेषादिराशिपतयो रोहिण्यादिनक्षत्रपतयः ककारादि वर्णपतयश्च वर्णिताः । अन्ते च सूक्ष्मचक्रस्य विस्तरेण निरूपणं कृतम् ।

**पञ्चमे पटले** महाकथहचक्रस्य स्वरूपम्, तत्तत्स्थानस्थितानां वर्णानां फलानि, प्राणायामादिसिद्धिः, वाक्सिद्धिः, शिवसायुज्यावाप्तिरित्यादीनि विस्तरेण प्रोक्तानि ।

**षष्ठे पटले** पशुभाव-वीरभाव-दिव्यभावेति भावत्रयसम्पादनेन फलानि क्रमशः प्रोक्तानि सन्ति । तथा हि—

आदौ भावं पशोः कृत्वा पश्चात् कुर्यादवश्यकम् ।
वीरभावं महाभावं सर्वभावोत्तमोत्तमम् ॥
तत्पश्चादतिसौन्दर्यं दिव्यभावं महाफलम्[2]। इत्यादि ।

कुमारीपूजनस्यापि महत्त्वमत्र वर्णितमस्ति[3] ।

**सप्तमे पटले**ऽपि कुमारीपूजनेऽतिशयितं महत्त्वमुक्तम् । आत्मध्यानपरायणेन पशुभावापन्नेन पुरुषेण कुमार्याः पूजा ससम्मानं करणीया । पूजाविधौ कुमार्या जातिपरीक्षा न कार्या । उक्तञ्च—

रजकस्यापि कन्यां ते तथा नापितकन्यकाम् ।
गोपालकन्यकां चैव तथा ब्राह्मणकन्यकाम् ॥

---

१. रु० या० १।२४३; २. तत्रैव—६।५२-५४; ३. तत्रैव—६।८८-१०२।

चण्डालकन्यकां वाऽपि यत्र कुत्राश्रमे स्थिताम् ।
पूजयेत् परमानन्दैरात्मध्यानपरायणः ॥
तस्यावश्यं कुमारीणां पूजनं भोजनं रवेः ।
तेजोरूपं विधोश्चाग्नेः सर्वभावे प्रशस्यते ॥
तत्पूजनात्तदालापाद् भोजनादपि तत् शुभम् ।
मम प्रीतिर्भवेत् साक्षाद्देवतागुप्तिसंस्थिता[1] ॥

देवीबुद्धया कुमारी पूजनीया । पूजाविधिश्च सम्यक् प्रोक्ता, मायाबीजेन पाद्यम्, लक्ष्मीबीजेन अर्घ्यम्, सदाशिवेन मन्त्रेण धूपदीपयोर्दानम्[2] । अग्रे च महामन्त्रस्य श्लोकद्वयेन संकेत उक्तः[3] ।

**अष्टमे पटले** कुमारीपूजनाङ्गभूतस्य जपहोमयोश्चर्चा विशेषतः कृता । घृताक्तबिल्वपत्रं श्वेतपुष्पं कुन्दपुष्पं करवीरपुष्पं घृताक्तचन्दनागुरुमिश्रितं सर्वं द्रव्यं हवने नियोजयेत्[4] ।

ततश्च हवनान्ते पञ्चदशश्लोकतः प्रारभ्य चतुस्त्रिशश्लोकं यावद् भगवत्याः स्तोत्रमन्त्राः, अग्रे च फलश्रुतिः, ततोऽग्रे तर्पयामिपदघटितानि श्रुतिपद्यानि । एभिर्मन्त्रैर्भगवत्यास्तर्पणं क्षीराम्बुना मधुमिश्रितेन कार्यम् ।

**नवमे पटले** कुमारीकवचस्य स्वरूपमुक्तम् । तस्य भूर्जपत्रे लेखनं कृत्वा चतुर्दश्यां पौर्णमास्यां वा हृदयस्थाने धारयेत् ।

'महापातकयुक्तोऽपि मुक्तः स्यात् सर्वपातकैः' ।

अन्ते च मोक्षावाप्तिफलमुक्तम् ।

**दशमे पटले** कुमार्या अष्टोत्तरसहस्रं नामानि महापुण्यप्रदानि उक्तानि । तेषां पठनेन, भूर्जपत्रे लिखित्वा धारणेन सर्वसंकटेभ्यो मुक्तिर्भवति । मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रास्वरूपं च ज्ञात्वा सकलयज्ञफलप्राप्तिः । पुनश्च सहस्रनामकवचस्योल्लेखः । वत्सरार्द्धं प्रपाठेन त्रिजगन्मोहनं भवति । वत्सरं यावत् पाठेन खेचरत्वप्राप्तिर्योगसिद्धिश्च । नित्यपाठेन जलस्तम्भनमग्निस्तम्भनं वायुवेगावाप्तिः । सहस्रनामभिर्हवनम्, हवनीयद्रव्यगणना, हवनकर्मणः फलकथनम् ।

**एकादशे पटले** दिव्य-वीर-पशुभावानां स्वरूपकीर्तनम् ।
एकादशे च पटले शुद्धभावार्थनिर्णयम् ।
भावेन लभ्यते सर्वं भावाधीनं जगत्त्रयम् ॥
भावं विना महादेव न सिद्धिर्जायते क्वचित्[5] ।

वामदक्षिणनासिकाछिद्राभ्यां वायोरागमनगमनयोः फलम् । मेषादिद्वादशराशिषु क्रमशः आज्ञाचक्रम्, कामचक्रम्, फलचक्रम्, प्रश्नचक्रम्, भूमिचक्रम्, स्वर्गचक्रम्, तुलाचक्रम्,

---

१. कु० या० ७।५-११; २. तत्रैव—७।६०-६१; ३. तत्रैव—७।६३-६४ ।
४. तत्रैव—८।१-५; ५. तत्रैव—११।४३-४४ ।

वारिचक्रम्, षट्चक्रम्, सारचक्रम्, उल्काचक्रम्, मृत्युचक्रं च निर्मातव्यम्। एषु चक्रेषु अनुलोमविलोमतः षट्कोणानि कार्याणि। सर्वचक्रेषु स्वरज्ञानं वायुगतिं च ज्ञात्वा प्रश्नविचारो विधेयः। विस्तरेण विधिर्ग्रन्थतः सम्प्रदायतश्च ज्ञातव्यः।

**द्वादशे पटले** कामचक्रस्य स्वरूपं कया रीत्या सम्पाद्यम्? तत्र प्रश्नस्य प्रकारस्तत्फलं च। पुनः फलचक्रस्य, तत आज्ञाचक्रस्य स्वरूपं फलं चैतत् सर्वं निरूपितमस्ति।

**त्रयोदशे पटले** आज्ञाचक्र एव राशि-नक्षत्र-वार-गणनाविधानम्, वर्णस्यापि स्वरूपं ज्ञात्वा प्रश्ने कृते नानाविधानां फलानां वर्णनम्। अश्विन्याद्यष्टनक्षत्रेषु, पुनः आश्लेषादिचित्रान्तेषु, पुनः स्वात्यादिवसुनक्षत्रेषु, पुनश्चोत्तराषाढादिरेवत्यन्तेषु नक्षत्रेषु प्रश्नानां विविधानि फलानि वर्णितानि।

**चतुर्दशे पटले** आज्ञाचक्रविषय एव भरण्यादिसप्तविंशतिनक्षत्राणां स्वरूपाणि फलानि च विस्तरेण वर्णितानि।

**पञ्चदशे पटले** आज्ञाचक्रस्यात्रापि विशदं माहात्म्यादिवर्णनम्, ब्रह्मस्तोत्र-ब्रह्मविद्या-ब्रह्मज्ञानिलक्षणवर्णनम्, ब्रह्ममार्गस्थानां षट्चक्रमण्डले स्वरूपनिरूपणम्, वैष्णवलक्षणम्।

**षोडशे पटले** आज्ञाचक्रस्य भुवनकरणसामर्थ्यं निरूप्य तत्र अधोमण्डलमण्डिते द्विबिन्दुनिलये द्विदले स्थाने श्रीगुरोः पदस्य ध्यानं विहितमस्ति। तन्मध्ये महावह्निशिखा-कृतेरपि चिन्तनं प्रतिपादितमस्ति। एतद्योगप्रसादेन चिरजीवित्वं वागीश्वरत्वं च फलं निरूपितम्। पुनश्च त्रिखण्डे आज्ञाचक्रे श्मशानाधिपवेष्टितं कलानिधिं महाकालं तीक्ष्ण-दंष्ट्रं बहुरूपिणं सुरेश्वरं ध्यायेत्, नासिकाया ऊर्ध्वभागे भ्रुवोर्मध्ये परेश्वरस्य कालरुद्रस्य ध्यानेन झटिति तन्मयता भवति। पुनश्च तत्र नानालङ्कारशोभाङ्ग्या नवयौवन-शालिन्या रौरवादिविनाशिन्या डाकिनी-भगवत्या ध्यानं विधेयम्। एषैव भगवती त्रिपुरसुन्दरीपदेनापि विख्याताऽस्ति। पूरक-कुम्भक-रेचकप्राणायामद्वारा मनोयोगेन ध्यानं कार्यम्। षण्मासपर्यन्तं प्रातः सायं निरन्तरं ध्यानेन महती सिद्धिः, संवत्सरं ध्यानेन खेचरो योगिराड् भवति, अन्ते च कौलमार्गं पालयन्नमरत्वं प्राप्नोति।

**सप्तदशे पटले**ऽथर्ववेदस्य लक्षणमुक्तम्। तच्च सर्ववर्णानां सारतया शक्त्या-चारसमन्वयरूपत्वं प्रोक्तम्। अथ च ऋगादिवेदा जलचरभूचर-खेचराः, कुलविद्या, महाविद्या, बिन्दुत्रयलयस्थितिः, ब्रह्मविष्णुशिवाः, चतुर्विंशतितत्त्वानि चेमे सर्वेऽथर्ववेदे निवसन्ति। पुरदेवतारूपायाः कुण्डलिन्याश्चैतन्यकरणे षण्मासाभ्यासस्योपायता प्रदर्शिता। तस्याश्चैतन्यसम्पत्तौ भूयांसि फलानि प्रदर्शितानि।

कामरूपे मूलाधारे सा भगवती प्रज्वलन्ती विराजते। यदा सा सहस्रदलपङ्कजे शिरोमण्डले सम्बन्धं प्रज्वलन्तं सम्पादयति, तदा साधको योगिराड् भूत्वा परमज्ञाना-नन्दे निमग्नो भवति। यदा शिरसि समागम्य अमृतपानं सा करोति, तदा परमां सिद्धिं प्राप्नोति साधकः। वायव्याः सिद्धेरुपायः प्रदर्शितः। तत्र मिताहारः, मनसः संयमः,

दया, शान्तिः, सर्वत्र समबुद्धिः, परमार्थविचारः, भूमितले शरशय्याशयनम्, गुरुचरणयोः श्रद्धा, अतिथिसत्कारः, ब्रह्मचर्यव्रतपालनम्, हर्षशोकयोः समभावः, मौनधारणम्, एकान्तस्थानसेवनम्, बहुजल्पनशून्यता, हास्यहिंसादिराहित्यम्, एतानि साधनानि भवन्ति भगवत्याः कुण्डलिन्याश्चैतन्यसम्पादने। अथ च ललाटे, भ्रूमध्ये, अष्टपुरे कण्ठे, नाभिप्रदेशे, कट्यां चैतेषु पीठेषु वायुनिरोधात्मकः कुम्भकप्राणायामोऽपि परमोपायस्तस्या जागरणे। तत्रोक्तम्—

चालयित्वा महावायुं कुम्भयित्वा पुनः पुनः।
पूरयित्वा रेचयित्वा रोमकूपाद् विनिर्गतम्॥
तिस्रः कोट्यर्धकोटी च यानि लोमानि मानुषे।
नाडीमुखानि सर्वाणि घर्मबिन्दुं च्यवन्ति हि॥
यावत्तद्बिन्दुपातश्च तावत्कालं लयं स्मृतम्।
तावत्कालं प्राणयोगात् प्रस्वेदाधमसिद्धिदम्॥
सूक्ष्मवायुसेवया च किं न सिध्यति भूतले।
लोमकूपे मनो दद्यात् लयस्थाने मनोरमे॥
स्थिरचेता भवेत् शीघ्रं नात्र कार्या विचारणा।
वायुसेवां विना नाथ! कथं सिद्धिर्भवेद् भवे[1]॥

अनया रीत्या संवत्सरेण कृताभ्यासस्य महाखेचरता प्राप्यते। अस्या वायव्याः सिद्धेः प्रसङ्गे महर्षिवसिष्ठस्य साधकतया चर्चा कृताऽस्ति। तत्र च—

वसिष्ठो ब्रह्मपुत्रोऽपि चिरकालं सुसाधनम्॥
चकार निर्जने देशे कृच्छ्रेण तपसा वशी।
शतसहस्रं वत्सरं च व्याप्य योगादिसाधनम्॥
तथापि साक्षाद् विज्ञानं न बभूव महीतले[2]॥

इतः परं क्रुद्धो महर्षिः पितुः सकाशं जगाम, शापं प्रदातुमुद्यतो बभूव। पित्रा श्रीब्रह्मदेवेन निवारितः, तपोमार्गे वायव्याः भगवत्याः साधने समुत्साहितश्च। तदनु महर्षिवसिष्ठो जलधेस्तीरे सहस्रवत्सरं सम्यग् जपं कृतवान्। पुनश्च सिद्धिमप्राप्नुवन् महाविद्यां शप्तुमुद्यतोऽभवत्। शापे प्रदत्ते सति सा भगवती महाविद्याऽऽविरभवत्। उवाच च—अहो महायोगिन्!

ममैव साधनं पुण्यं वेदानामप्यगोचरम्।
बौद्धदेशेऽथर्ववेदे महाचीने तदा व्रज॥
तत्र गत्वा महाभावं विलोक्य मत्पदाम्बुजम्।
मत्कुलज्ञो महर्षे त्वं महासिद्धो भविष्यसि॥
एतद् वाक्यं कथित्वा सा वायव्याकाशवाहिनी।
निराकाराऽभवत् शीघ्रं ततः साकाशवाहिनी[3]॥

---

१. रु० या० १७।५६-६०; २. तत्रैव—१७।१०६-१०८; ३. तत्रैव—१७।१२२-१२४।

एतदनन्तरं महामुनिः चीनभूमौ जगाम। तत्र च भगवान् बुद्धो महामुनिं वसिष्ठमुपदिष्टवान्—

वसिष्ठ श्रृणु वक्ष्यामि कुलमार्गमनुत्तमम्।
येन विज्ञातमार्गेण रुद्ररूपी भवेत् क्षणात्॥
एकाकी निर्जने स्थित्वा कामक्रोधादिवर्जितः॥
दमयोगाभ्यासरतो योगशिक्षादृढव्रतः।
वेदमार्गाश्रयो नित्यं वेदार्थनिपुणो महान्[1]॥

ततश्च शक्तिचक्रं सत्त्वचक्रं नवविग्रहं वैष्णवं च समाश्रित्य परां भगवतीं कात्यायनीं जपेत्। भगवत्याः स्वरूपमपि वर्णितमस्ति। कुलमार्गः परममार्गतया प्रोक्तः तदाश्रयणेन ब्रह्मा स्रष्टा, विष्णुः पालकः, हरश्च संहारको भवति। जीवात्मपरमात्मनोर्महान् सम्बन्धः प्रकाशितोऽनेन वर्णनेन।

**अष्टादशे पटले** भगवत्या कामचक्रस्य वर्णानां प्रश्ननिर्णयात्मकं वर्णनं कृतम्। आज्ञाचक्रस्य मध्यभागे कोटिरसालिन्या नाड्या मध्ये मनोरमस्य कामचक्रस्य स्थितिरस्ति। एतदीयकोष्ठेषु वर्णानां स्थापनेन फलं निर्दिश्यते। सर्वेषु चक्रेषु परममुत्तममिदं कामचक्रमस्ति। काम्यफलस्यानुत्तमा सिद्धिर्भवति। प्रश्नविषयवर्णेषु वर्गभेदेन फलभेदः कथितः।

कवर्गे कामसम्पत्ति श्रिया व्याप्तं सुमन्दिरम्।
प्राप्नोति कामचक्रार्थं राशिनक्षत्रसम्मतम्॥
चवर्गे दीर्घजीवी स्याद् दृढसम्पदमेव च।
वृत्तिं प्राप्नोति गमनादनुद्दिश्य शरीरिणः॥
समाचारं समाप्नोति गमने सर्वमुत्तमम्।
टवर्गे सम्भवे नाथ महदुच्चाटनादिकम्॥
पुत्राणामपि वृद्धिः स्यात् तवर्गे धनलाभकम्।
पवर्गे मरण नाथ यादिक्षान्ते महागुणी॥
कामचक्रफलं नाथ राशिदण्डेन योजयेत्।
निजगेहस्थितं राशिं ज्ञात्वा हि दिनदण्डतः॥
गणयित्वा शुभं ज्ञानी अनुलोमविलोमतः।
घटस्थं सकलं सन्धिकोणस्थं पार्श्वके शुभम्॥
शुभमन्त्रं गृहीत्वा तु सिद्धिमाप्नोति साधकः[2]॥

अनेन प्रकारेण संकेतः प्रश्नविषयकः सम्प्रदायसंवेद्यः।

**एकोनविंशे पटले** प्रश्नचक्रे षडाधारस्य भेदनमुक्तम्। तत्र च पुनः निर्विकल्पादिसाधनभूतं कालचक्रफलं निर्दिष्टम्, पुनश्च आज्ञाचक्रोपरि स्थितस्य प्रश्नचक्रस्य विषये फलनिरूपणं बहु कृतम्। काल एव मृत्युप्रदाताऽस्ति, तस्य कालस्य सूक्ष्मगतिज्ञान-

---

१. रु० या० १७।१३५-१३८; २. तत्रैव—१८।७७-८३।

मस्मादेव चक्राद् भवति। ग्रहनक्षत्रराशिसम्पृक्ता प्रश्नव्यवस्था प्रोक्ता, सा तु सम्प्रदायसंवेद्या, टवर्गे प्रश्नविषये वासनासिद्धिः खेचरीमेलनं च भवति, तवर्गे दीर्घजीवी इन्द्रतुल्यो भवति। पवर्गे परमस्थानस्य प्राप्तिः।

**विंशतितमे पटले** फलचक्रस्य सर्वमन्त्रसारतया निरूपणं कृतम्। तदीयषट्कोणेषु षण्मनुध्यानमुक्तम्। अष्टकोणेषु अङ्कभेदेन स्थितान् वर्णान् भावयित्वा खेचरताप्राप्तिः। एतच्च फलचक्रं प्रश्नचक्रस्योर्ध्वभागे स्थितं मन्तव्यम्। फलचक्रप्रसादेन तत्त्वचिन्ता-परायणता भवति। अष्टकोणानामूर्ध्वभागे वर्णमालाविधिरित्थं प्रोक्तः—

ओ औ पवर्गमेवं हि यो नित्यं भजतेऽनिशम्॥
तस्य सिद्धिः क्षणादेव वायवीरूपसाधनात्।
चन्द्रबीजस्योर्ध्वदेशे विभाति पूर्णतेजसा॥
ऌ ए ऐ तवर्गञ्च तद्दक्षिणविधानतः।
तेजोमयी वायुशक्तिर्ददाति सर्वमङ्गलम्॥
टवर्गं भावयेन्मन्त्री ऋ ॠ ऌ स्वरसंयुतम्।
अष्टैश्वर्यप्रदं नित्यं कमलासनसिद्धिदम्॥
इ ई युग्मं तवर्गं च भावयित्वाऽमरो भवेत्।
अ आ इ संयुतो नाथ कवर्गः कुरुते जयम्॥
इत्येतत्कथितं नाथ फलचक्रं च सादरम्।
एतच्चक्रभावनाभिर्महाविद्यापतिर्भवेत्[1] ॥

अयं सर्वोऽपि प्रकारः सम्प्रदायतो वेदनीयः।

**एकविंशे पटले** योगमार्गानुसारेण वीरभावस्य साधनं सर्वसिद्धिप्रदं प्रोक्तम्। महायोगस्तु वेदाधीनः, योगाधीना कुण्डली शक्तिः कुण्डल्यधीनं चित्तम्, तदधीनं चराचरमुक्तम्। पुनश्च भूमिचक्रस्य वर्णनम्। अत्र षड् गृहाणि वर्णितानि। मध्यगेहं र-बीजकं ध्यायेत्। दक्षिणे गृहे वकारात्मकं बीजम्, वारुणाध्यक्षं वं बीजम्, देवेन्द्रपूजितं लं बीजम्, दक्षिणपार्श्वे श्रीबीजम्, वामपार्श्वे ब्रह्मसम्मितं प्रणवबीजं ध्यायेत्। इत्थं चानेकधा भूमिचक्रीयं ध्यानं प्रोक्तमस्ति। द्वितीये दक्षिणे पत्रे वान्तबीजं महाप्रभं ध्यातव्यम्। तत्र स्वर्गशोभासमाकुलं स्वर्गचक्रमनेकधा ध्यानगर्भं प्रोक्तम्। वायवीशक्तिसम्पृक्तस्यास्य चक्रस्य समाश्रयेण ध्यानकर्ता वाक्पतिर्भवति।

तृतीयदलमध्ये तुलाचक्रस्य विशिष्टं ध्यान-फलादिवर्णनं कृतमस्ति। अस्मिन् तुलाचक्रे षकारं व्याप्य मौनभावेन जपः क्रियते, तर्हि योगिराड् भूत्वा कुण्डलीजागरणे सामर्थ्यं प्राप्नोति। पुनरग्रे वारिचक्रस्य विस्तृतं वर्णनं कृतम्। तत्र च गङ्गादयो महानद्यो लवणादिसप्तसागराः, समस्तानि तीर्थानि च वर्णितानि सन्ति। समस्ताङ्गोपाङ्गसहित-स्यैतस्य चक्रस्य प्रसादेन चिरजीवित्वं योगिराजत्वादिकं च भवति।

---

१. रु० या० २०।३२-३९।

**द्वाविंशे पटले** षट्चक्रस्य फलोदय उक्तः। प्रथमं चतुर्दलसमन्वितं मूलाधारं महापद्ममस्ति। एतच्च वकारादिसकारान्तं स्वर्णवर्णं शक्तितत्त्वस्य ब्रह्मतत्त्वस्य च समर्पकमस्ति, एवमस्य ध्यानं विधेयम्। मूलविद्यायाः सिद्धिरप्येतत् फलम्। मूलपद्मस्योर्ध्वदेशे षड्दलशोभितं महाप्रभं स्वाधिष्ठानं वकारादिलकारान्तं विष्णुं कर्णिकास्थाने ध्यातव्यम्। तस्योर्ध्वे नाभिदेशे मणिकोटिसमप्रभं दशदलयुतं डादिफान्तं योगवर्णं ध्यायेत्। पुनश्च तदूर्ध्वदेशे बन्धूकपुष्पसंकाशं द्वादशदलशोभितं महामोक्षप्रदं लाकिनीयुक्तं भगवन्तं रुद्रं ध्यायेत्। तदूर्ध्वे कण्ठदेशे षोडशोल्लासशोभितं साक्षात्सदाशिवं साकिनीसहितं महादेवीसमन्वितं ध्यायेत्। पुनस्तदूर्ध्वे भ्रूकटे प्रदेशे बिन्दुपदं हंसस्थानं हिमकुन्देन्दुसमप्रभं द्विदलमाज्ञानामोत्पलं ध्यायेत्। पुनः षोडशपत्रे कण्ठे षोडशस्वरवेष्टितमकारादिविसर्गान्तं तत्त्वं विभाव्य कुण्डलिनीं देवीं ध्यायेत्, जीवन्मुक्तो भवेत्। अथ च कीदृशस्य साधकस्यैषा सिद्धिर्भवतीत्युच्यते—

आचारो विनयो विद्या प्रतिष्ठा योगसाधनम्।
तस्यैव जायते सिद्धिरिष्टपादाम्बुजे मतिः॥
देवे गुरौ महाभक्तिर्यस्य नित्यं विवर्धते।
संवत्सरात्तस्य सिद्धिर्भवत्येव न संशयः॥
वेदागमपुराणानां सारमालोक्य यत्नतः।
मनः संस्थापयेदिष्टपादाम्भोरुहमण्डले॥
चेतसि क्षेत्रकमले षट्चक्रे योगनिर्मले।
मनो निधाय मौनी यः स भवेद् योगवल्लभः॥
मनः करोति कर्माणि मनो लिप्यति पातके।
मनःसंयमनी भूत्वा पापपुण्यैर्न लिप्यते[1]॥

अग्रे च प्रणवस्य ध्यानमुक्तम्। तत्र अकारादिक्रम उक्तः, अकारो ब्रह्मणो रूपतयोक्तः। उकारो वैष्णवरूपत्वेन प्रोक्तः, मकारः शम्भुरूपतया निर्दिष्टः। एवं वर्णत्रयविभागेन प्रणवस्य कल्पना कृता। प्रणवाज्जायते हंसः, हंसः सोऽहं परः, तच्च सोऽहं ज्ञानं महाज्ञानं बोध्यम्, योगिनामपि दुर्लभमस्ति। पुनश्च—

हं पुमान् श्वासरूपेण चन्द्रेण प्रकृतिस्तु सः।
एतद्धंसं विजानीयात् सूर्यमण्डलभेदकम्॥
विपरीतक्रमेणैव सोऽहं ज्ञानं यदा भवेत्।
तदैव सूर्यगः सिद्धः स्वधास्वरप्रपूजितः॥
हंसं सूर्यं विजानीयात् सोऽहं चन्द्रो न संशयः।
विपरीतो यदा भूयात् तदैव मोक्षभाग् भवेत्[2]॥

अग्रे च प्रणवान्तमहामन्त्रस्य जपेन वायुसिद्धिः। बृहद्धंसस्य जपेन वाक्सिद्धिर्भवति। बृहद्धंसमन्त्रस्य स्वरूपमपि गोप्यतया सङ्केतितमस्ति।

---

१. रु० या० २२।३२-३६; २. तत्रैव—२२।९३-९४,९७।

**त्रयोविंशतितमे पटले** पूरक-कुम्भक-रेचकविधिना वायुभक्षणस्य विशिष्टो विधिर्वर्णितोऽस्ति। तस्मिन्नेव प्रसङ्गे पद्मासनाद्यासनविधिरपि प्रतिपादितः। वायुलोलापघाताय लोलासनस्य विधानं दर्शितमस्ति। सव्यापसव्ययोगेन उत्तमाङ्गासनस्य निर्देशः कृतः। पर्वतासनस्य स्थिरतासिद्धिरूपं फलमुक्तम्। पुनश्च योन्यासनस्य चर्चा कृता। तत्र लिङ्गगुह्यादिबन्धनं भवति। खगासन-भेकासन-महाभेकासन-अपानासन-समानासन-वीरासन-सिद्धवीरासन-ग्रन्थिभेदासन-कार्मुकासन-ज्ञानासन-मुण्डासन-गरुडासन-खञ्जनासन-पवनासन-सर्पासनादिविविधासनानां वर्णनं कृतम्। एतेषामासनानां लक्षणानि फलानि च विस्तरेण वर्णितानि सन्ति। अन्ते च काकरूपस्कन्धासनमुक्तम्, तत्समाश्रयणेन फलमित्थं निर्दिष्टम्—

कलिपापात् प्रमुच्येत वायवीं वशमानयेत्।
निजपादद्वयं बद्ध्वा स्कन्धदेशे च साधकः॥
नित्यमेतत् पदद्वन्द्वं भूमौ पुष्टिकरद्वयम्[1]॥

ज्ञानासन-गरुडासन-सर्पासनानां विषये विशेषो द्रष्टव्यः। सम्प्रदायतो ज्ञात्वा एषामासनानां सदाभ्यासो विधेयः।

**चतुर्विंशे पटले** आसनानां प्राचुर्येण निरूपणं वर्तते। 'शतलक्षसहस्राणि आसनानि महीतले' इत्युक्तम्। तत्र प्रथमं कूर्मासनस्य लक्षणं फलं चोक्त्वा समानासन-कुम्भीरासनयोः स्वरूपं फलं चोक्तम्। ततः मकरासन-सिंहासन-व्याघ्रासनानां स्वरूपं फलं चोक्तम्। कुञ्जरासन-भल्लूकासन-गरुडासन-वर्तुलासन-मोक्षासन-मालासन-दिव्यासन-अर्द्धोदयासन-चन्द्रासन-हंसासन-योगासन-गदासन-लक्ष्म्यासन-कुल्यासन-ब्राह्मणासन-क्षत्रियासन-वैश्यासन-शूद्रासन-जात्यासन-पाशवासन-नरासन-भेकासन-शैलासन-स्वेच्छासन-पद्मासन-कोमलासन-मृतासन-वीरासनप्रभृतीनि आसनानि स्वरूपोपन्यासमुखेन कथितानि। अन्ते च जितेन्द्रियेण साधकेन शवेन्द्रस्य साधनं कर्तव्यमित्युक्तम्। तद्यथा—

यावत्कालं स्थिरं चित्तं न प्राप्नोति जितेन्द्रियः।
तावत्कालं नापि कुर्यात् शवेन्द्रस्यापि साधनम्॥
शवमानीय तद्द्वारे तेनैव परिखन्य च।
तद्दिनात्तद्दिनं यावत् यद् बद्ध्वा व्याघ्र साधयेत्॥
एवं कृत्वा हविष्याशी महाविद्यादिसाधनम्।
जितेन्द्रियो मुदा कुर्याद् अष्टाङ्गसाधनेन च॥
अष्टाङ्गधारणेनैव सिद्धो भवति नान्यथा।
अष्टाङ्गलक्षणं वक्ष्ये साक्षात् सिद्धिकरं परम्॥
जन्मकोटिसहस्राणां फलेन कुरुते नरः।
यमेन लभ्यते ज्ञानं ज्ञानात् कुलपतिर्भवेत्[2]॥

---

१. रु० या० २३।११३-११४; २. तत्रैव—२४।११६-११८, १३२-१३३।

आसनस्य दीर्घजीवित्वं फलम् । प्राणायामस्य वशीभावः, प्रत्याहारस्य कामनालयः, धारणाया वायुसिद्धिः, ध्यानस्य मोक्षसुखम्, समाधेः महाज्ञानं सूर्यचन्द्रलोकयोर्गमनम्, स्थिरमतिप्रयुक्ता शान्तिश्च फलत्वेन उक्ताः सन्ति । विस्तरस्तु तत्रैव द्रष्टव्यः ।

**पञ्चविंशे पटले** सृष्टिप्रक्रियायामुत्पत्ति-पालन-संहारवर्णनं कृतम् । तत्राव्यक्तरूपात् प्रणवात् सृष्टिः, सूक्ष्माकारात् खे (आकाशे) प्रतिभानम्, स्थूलकलान्निरक्षरात् प्रणाशः । मायादिकस्य वशीकरणेन योगप्रतिष्ठा भवति । काम-क्रोध-मोह-मद-मात्सर्यलोभादीनां जयेन योगस्य पराकाष्ठा । अहिंसा, सत्यम्, अस्तेयम्, मिताहारः, प्रपञ्चार्थवर्जनम्, शौचम्, ब्रह्मचर्यम्, आर्जवम्, क्षमा, धैर्यं च साधकस्यावश्यकम् ।

साधकस्य कृते चरमावस्थायां ब्रह्मज्ञानं परमावश्यकम् । तदुक्तम्—

कोटिकन्याप्रदानेन कोटिजापेन किं फलम् ।
ब्रह्मज्ञानसमो धर्मो नान्यधर्मो विधीयते ॥
ब्रह्मज्ञानं तु द्विविधं प्राणायामजमव्ययम् ।
भक्तिवाक्यं शब्दरसं स्वरूपं ब्रह्मणः पदम्[1] ॥

एतत्प्रसङ्गेनैवोक्तम्—

इडा च भारती गङ्गा पिङ्गला यमुना मता ।
इडापिङ्गलयोर्मध्ये सुषुम्ना च सरस्वती ॥
त्रिवेणीसंगमो यत्र तीर्थराजः स उच्यते ।
त्रिवेणीसंगमे वीरश्चालयेत्तान् पुनः पुनः ॥
सर्वपापाद् विनिर्मुक्तः सिद्धो भवति नान्यथा ।
पुनः पुनः भ्रामयित्वा महातीर्थे निरञ्जने[2] ॥

पुनश्च प्राणायामस्य त्रिसन्ध्यं विधानम् । पुनश्च--

महामृता खेचरी च सर्वतत्त्वस्वरूपिणी ।
कीदृशी शांकरीविद्या श्रोतुमिच्छामि तत्क्रियाम् ॥
पथापथज्ञानविवर्जिता ये धर्मार्थकामाद्धि विहीनमानसाः ।
विनावलम्बं जगतामधीश्वर एषैव मुद्रा विचरन्ति शांकरी[3]॥

पुनश्च महादेव्याः कुण्डलिन्याः प्राणायामस्य च स्वरूपप्रकारो विस्तरेण निरूपितः ।

**षड्विंशे पटले** प्राणायामस्य जपध्यानान्यतरगर्भता प्रोक्ता । तत्र जपस्यापि व्यक्ताव्यक्तातिसूक्ष्मभेदेन त्रैविध्यमुक्तमस्ति । व्यक्तो वाचिकः, अव्यक्त उपांशुः, सूक्ष्मो मानसः । ध्यानस्य तु एकविंशतिः प्रकाराः सन्ति । ध्यानस्तु मनोमात्रसाध्यः । तद्यथा—

---

१. रु० या० २५।३६,३९; २. तत्रैव—२५।४५-४७; ३. तत्रैव—२५।९९,१०४ ।

मनः करोति सर्वाणि धर्मकर्माणि सर्वदा ।
यत्र गच्छति स श्रीमान् तत्र वायुश्च गच्छति ॥
ध्यायेद्देवीं कुण्डलिनीं परापरगुरुप्रियाम् ।
आनन्दां भुवि मध्यस्थां योगिनीं योगमातरम् ॥
कुण्डलीभावनादेव खेचराद्यष्टसिद्धिभाक् ।
ईश्वरत्वमवाप्नोति साधको भूपतिर्भवेत् ॥
त्रिविधं कुण्डलीध्यानं दिव्यवीरपशुक्रमम् ।
पशुभावादियोगेन सिद्धो भवति योगिराट् ॥
अस्या ध्यानप्रसादेन त्वं तुष्टो भैरवः स्वयम् ।
अहं च तुष्टा संसारे सर्वे तुष्टा न संशयः[1] ॥

अन्ते च पञ्चमकारसेवनविधिः प्रोक्तः । स चेत्थम्—व्योमपङ्कजनिष्यन्द-सुधापानमेव मद्यपानम् । पुण्यापुण्यपशुहननं ज्ञानखड्गेन कृत्वा परशिवस्य स्वमनसाऽऽ-स्वाद एव मांसभक्षणास्वादः । शरीरस्थजले स्थितानां मत्स्यानां भक्षणमेव मत्स्य-भक्षणम् । महीगतस्निग्धसौम्योद्भवमुद्रा ब्रह्माधिकरणे समारोप्य सुधीः तर्पयेत्, एतदेव मुद्राभोजनम् । परशक्त्या सहात्मसंयोग एव मैथुनम्, अनया रीत्या पटलान्ते पञ्च-मकारचर्चा विस्तरेण द्रष्टव्या ।

**सप्तविंशे पटल** आनन्दभैरवेण अष्टाङ्गयोगस्य फलं पुनरपि पृष्टम्, प्राणवायोर्हरणं प्राणधारणम्, प्रत्याहारः, धारणा, ध्यानम्, समाधिश्च विस्तरेण पृष्टाः । तदुपरि आनन्दभैरव्या उत्तरितम्—

पूरकाह्लादसिद्धेश्च प्राणायामशतं शतम्[2] ॥

प्रतिपद्द्वितीयादितिथ्यनुसारेण प्राणायामविधिः प्रोक्तः । यदि तिथिव्यत्यासः क्रियते, तदा मरणं रोगो बन्धुनाशश्च भवति । प्राणायामस्य फलं भूतदर्शित्वं दूरश्रवणं च । इन्द्रियाणां प्रत्याहार ईश्वरे भक्तिः, खेचरत्वम्, विषयेषु निवर्तनम् । धारणाया धैर्यधारणं प्राणवायोः प्रशमनम् । ध्यानयोगस्य फलं मोक्षावाप्तिः । समाधिफलं जीवात्मपरमात्मनोः समत्वभावना ।

अनाहत-विशुद्ध-महापूरक-मणिपूरक-बिन्दुचक्रादिस्वरूपफलयोश्च वर्णनम् । षट्चक्रभेदन-प्रक्रिया, पञ्चकृत्यविधिश्च विस्तरेणात्र पटले द्रष्टव्यः । अन्ते च भगवतः शिवस्य कीर्तनं ध्यानं मननं दास्यं सख्यमात्मनिवेदनं चोक्तम् । एतद्भक्तिप्रसादेन जीवन्मुक्तिलाभः ।

**अष्टाविंशे पटले** मन्त्रसिद्धेर्लक्षणमुक्तम्, तच्च तर्पणं होमभोजनं प्रत्यहं प्राण-वायुपानं सूक्ष्मचन्द्रनियोजनादि कर्म कुर्यात्, एतत्कर्मकरणेनोत्तमा मन्त्रसिद्धिर्भवति । कुण्डलिनी महाभगवती योगेन चैतन्यमुखी भवति, अतो योगं सदा कुर्यात् । वीरभावेन पुरश्चरणकर्मणा सिद्धिरुक्ता—

---

१. रु० या० २६।१२,२१,३१,५०,६७;   २. तत्रैव—२७।५ ।

तत्र वीरो यजेत् कान्तां परकीयामथापि वा ।
स्वीयामलङ्कारयुक्तां सुन्दरीं चारुहासिनीम् ॥
दीक्षितां लोलवदनां वदनाम्भोजमोहिनीम् ।
नानादेशस्थितां कन्यां युवतीं परिपूजयेत्[1] ॥

ईदृश्या युवत्याः परिपूजनं वीरभावस्थितेन कार्यम् । ततः षोडशकन्यापूजनं नानावस्त्रालङ्कार-गन्धफल-मृगनाभिचन्दन-श्रीखण्ड- नानासुगन्धिपुष्प-रक्तचन्दनकुङ्कुम-कमलपुष्प-नवपल्लवादिभिः निर्जने विपिने करणीयम् । परा मोक्षदा कामचारिणी भाविनी भवानी विद्या सदा पूजनीया, तस्या अङ्के समस्ता देवतास्तिष्ठन्ति । योगिना शुद्धभावेन तस्याः समर्चा विधेया, तत एव अचिरेण योगसिद्धिर्भवति ।

अथ च षट्चक्रभेदनक्रिया वर्णिता, सर्वव्याधिविनाशश्च तत्फलत्वेन प्रोक्तः । पुनश्च कन्दवासिनीदेव्याः स्तोत्रं तन्मन्त्रविन्यासश्च विस्तरेण प्रोक्तः ।

सा बालाबलवाहना सुगहना सम्मानना धारणा
खं खं खं खचराचरा कुलचरा वाचाचरा वंखरा ।
चं चं चं चमरीहरीभगवती गाथागताः संगतिः
बाहौ मे परिपातु पङ्कजमुखी या चण्डमुण्डापहा[2] ॥

अनया रीत्या भगवत्याः स्तुतिपद्यानि विन्यस्तानि ।

**एकोनत्रिंशे पटले** पुनरपि षट्चक्रभेदनमुक्तम् । षट्चक्रज्ञाता सर्वशास्त्रार्थविद् भवति । तत्र चतुर्दलं मूलपद्मं वादिलान्तार्णसम्भवमस्ति । आद्याक्षरं वं वरभावसाधनं नारायणं भावनपत्रमच्युतं तेजोमयं ध्यायेत् । एवं कनकाचलप्रभं गौरीपतेः श्रीकरणं पुराणं सर्वसुवर्णवेष्टितं सदा मुदा शकारं ध्यायेत् । षकारमीश्वरीषष्ठगुणावतंसं षट्पद्मसम्भेदनकारकं हेमाचलं ध्यायेत्, ततश्च आनन्दरसं सकारम्, मायामहामोहविनाशनं हकारं च ध्यायेत् । ततश्च पुनर्ध्यानप्रकार उक्तः—

चतुर्भुजं भुजयुगमष्टादशभुजन्तथा ।
अष्टहस्तं सदा ध्यायेन्मन्त्री भावविशुद्धये ॥
ततो ध्यायेत् कर्णिकायां मध्यदेशे मनोरमम् ।
स्वयम्भूलिङ्गपरमं योगिनां योगसिद्धिदम् ॥
प्रातः सूर्यसमप्रख्यं तडित्कोटिसमप्रभम् ।
तं संवेष्ट्य महादेवी कुण्डली योगदायिनी ॥
सार्धत्रिवेष्टनग्रन्थियुता सा मुक्तिदायिनी ।
निद्रिता सा सदा भद्रा महापातकघातिनी ॥
मनो निधाय यो योगी श्वासमार्गपरो भवेत् ।
तदा सा द्रवति क्षिप्रं चैतन्या कुण्डली परा ॥

---

१. रु० या० २८।३२, ३४; २. तत्रैव—२८।८६ ।

मानी विचारार्थविवेकचित्तश्चातुर्यचित्तोल्बणताविवर्जितः ।
योगी भवेत् साधकचक्रवर्ती व्योमाम्बुजे चित्तविसर्जनं सदा[1] ॥

अनेन प्रकारेण ध्यानसाधनविधिर्वर्णितोऽस्ति ।

**त्रिंशत्तमे पटले** भेदिनीनामिकाया देव्या वर्णनमस्ति । तस्याः साधको मन्त्रः—

हर युग्मं स्वं महापापं नमो नमोऽग्निजायया ।
एतन्मन्त्रं जपेत्तत्र डाकिनीरक्षसि प्रभो[2] ॥

इतः पूर्वं वाक्यद्वयस्य योजना कार्या—

चित्तचञ्चीशब्दान्ते मां रक्ष युग्ममेव च ।
भेदिनी मम शब्दान्ते अकालमरणं हर[3] ॥

तदुत्तरम्—हर युग्ममित्यादि योजना करणीया ।

आदौ प्रणवमुद्धृत्य ब्रह्ममन्त्रं ततः परम् ।
शाम्भवीति ततश्चोक्त्वा ब्राह्मणीति पदं ततः ।
मनोनिवेशं कुरुते तारयेति द्विधापदम् ॥
छेदिनीपदमुद्धृत्य मम मानसशब्दतः ।
महान्धकारमुद्धृत्य छेदयेति द्विधापदम् ॥
स्वाहान्तं मनुमुद्धृत्य जपेन्मूलाम्बुजे सुधीः ।
एतन्मन्त्रप्रसादेन जीवन्मुक्तो भवेन्नरः ॥
स्वाहान्तं मनुमुद्धृत्य जपाद् योगी भवेन्नरः ।
खेचरत्वं समाप्नोति योगाभ्यासेन योगिराट्[4] ॥

अत्र पटले प्रधानतया डाकिनीदेव्याः स्तुतिपद्यानि पठितानि सन्ति, यथा—

या देवी नवडाकिनी स्वरमणी विज्ञानिनी मोहिनी
मां पातु प्रियकामिनी भवविधेरानन्दसिन्धूद्भवा ।
मे मूलं गुणभासिनी प्रचयतु श्रीः कीर्तिचक्रं हि मां
नित्या सिद्धिगुणोदया सुरदया श्रीसंज्ञया मोहिता ॥

धात्री धैर्यवती सती मधुमती विद्यावती भारती
कल्याणी कुलकन्यकाधरनरारूपा हि सूक्ष्मास्पदा ।
मोक्षस्था स्थितिपूजिता स्थितिगता माता शुभा योगिनां
नौमि श्रीभविकाशयां शमनगां गोतोद्गतां गोपनाम्[5] ॥

अनया रीत्या भगवती डाकिनी स्तुताऽस्ति । 'एवं ध्यात्वा पठेत् स्तोत्रं पठित्वा योगिराड् भवेत्'[6] इत्थं चान्ते फलसंकेतः कृतोऽस्ति ।

---

१. रु० या० २९।१२-१५, १९-२०, ४३; २. तत्रैव--३०।६-७; ३. तत्रैव--३०।५-६ ।
४. तत्रैव—३०।७-१०,१३; ५. तत्रैव--३०।३०,३२; ६. तत्रैव--३०।४१ ।

**एकत्रिंशे पटले** भेदिन्यादिदेवीनां साधनविधय उक्ताः सन्ति। तत्र भेदिनी-देव्याः साधनेन ग्रन्थीनां भेदनमाञ्जस्येन सम्पद्यते, उक्तञ्च—

या भेदिनी सकलग्रन्थिविनाशनानां
धर्मान्तरे सकलशत्रुविनाशनस्था।
सा मे सदा प्रतिदिनं परिपातु देहं
कालात्मिका भगवती शुभकार्यकर्त्री[1]॥

एतत्स्तोत्रपाठेन रिपुवर्गविनाशः, क्रोधपुञ्जविनाशः, भक्तितत्त्वस्योदयः, इह लोके राज्यावाप्तिरन्ते परमसुखावाप्तिश्च भवति।

**द्वात्रिंशे पटले** पुनरपि कुण्डलिनीदेव्याः स्तोत्रं ध्यानं न्यासो मन्त्रश्च वर्णितोऽस्ति। यावत्कालं कुण्डलिन्याः सिद्धिर्न जायते, तावत्कालं जपः कर्तव्य एव। मानसं होमतर्पणम्, मानसं ध्यानम्, मानसो जपः, मानसोऽभिषेकः—एतत्सर्वं यद्याचर्यते, तदा भावशुद्धौ सत्यां भगवत्याः सिद्धिर्भवत्येव। अन्ते च--

प्रणवेन पुटितं कृत्वा यः स्तौति नियतः शुचिः।
स भवेत् कुण्डलीपुत्रो भूतले नात्र संशयः[2]॥

अनया रीत्या भगवत्या ध्यानं स्तोत्रादिकं च विस्तरेण वर्णितमस्ति।

**त्रयस्त्रिंशे पटले** कुण्डली-कवचस्य प्रधानतया वर्णनं कृतमस्ति।

प्रातःकाले त्रिवारं च मध्याह्ने वारयुग्मकम्।
सायाह्ने वारमेकं तु पठेत् कवचमेव च।
पठेदेवं महायोगी कुण्डलीदर्शनं भवेत्[3]॥

पुनश्च—

शिरो मे ललिता देवी पातूग्राख्या कपोलकम्।
ब्रह्ममन्त्रेण पुटिता भ्रूमध्यं पातु मे सदा॥
नेत्रत्रयं महाकाली कामाग्निभक्षिका शिखाम्।
दन्तावलीं विशालाक्षी ओष्ठमिष्टानुवासिनी[4]॥

अनेन प्रकारेण सर्वेषामङ्गोपाङ्गानां रक्षणं देव्या कृतमस्ति।

तत्फलं च रोगविमुक्तिः, राज्यप्राप्तिः, लक्ष्मीप्राप्तिः, सर्वसिद्धिप्राप्तिश्च, विस्तरेण ग्रन्थे सर्वं द्रष्टव्यम्।

**चतुस्त्रिंशे पटले** जननमरणदुःखप्रशमनाय पञ्चस्वरनामकं योगं कुर्यात्। योगोऽयमत्यन्तं गोपनीयोऽस्ति। भगवत्याः श्रीकुण्डलिनीदेव्या अष्टोत्तरसहस्रसंख्याकानि नामानि यः पठति, स महायोगी भवति। पञ्चस्वरयोगविधिरुक्तः। आदौ नेती-योगः, ततो दन्तियोगः, ततो धौतीयोगः, ततो नेउलीयोगः, ततश्च नाडीनां चालनमि-

---

१. रु० या० ३१।८;  २. तत्रैव--३२।४३।
३. तत्रैव--३३।४-५;  ४. तत्रैव--३३।७-८।

त्येवं पञ्चस्वरविधानेन महाकफविनाशः, हृदयशुद्धिः, सर्वगलापहारः, सर्वान्त्रशोधनम्, सर्वनाडीशोधनं च क्रमशो भवति।

तत्र च दूर्वा-विजया-बिल्वपत्रम्, निर्गुण्डी, कालितुलसी, एतानि सर्वाणि पत्राणि समानीय चूर्णयेत्, अत्र विजयापत्रं द्विगुणं ग्राह्यम्। एतत्पत्रभक्षणे मन्त्रा अपि संकेतिता वर्तन्ते। भक्षणावसरे धेनुमुद्रा-योनिमुद्रा-मत्स्यमुद्राणां दर्शनं करणीयम्। तत्त्वमुद्रा-क्रमेणैव तर्पणमपि कर्तव्यम्। ततश्च कुण्डलीनामपूर्वकं हवनं कुर्यात्। नेतीक्रियायाः प्रकारः, दन्तीक्रियाप्रकारश्च विस्तरेण वर्णितोऽस्ति। पुनश्च दुग्धेन कुण्डल्यास्तर्पणं विहितम्।

**पञ्चत्रिंशे पटले** धौतीयोगस्य विधिर्वर्णितो वर्तते। सूक्ष्मात्सूक्ष्मतरं द्वात्रिंश-द्धस्तपरिमितं वस्त्रमानयेत्। एकहस्तमितवस्त्रत आरभ्य द्वात्रिंशद्धस्तमितवस्त्रं यावत् क्रिया कर्तव्या। एतत्क्रियाकरणेन दृढासने योगः सिध्यति। अष्टाङ्गुलं वस्त्रमायामे, दैर्घ्ये तु द्वात्रिंशद्धस्तमितमिति विवेकः। श्वासगणनापूर्वकं प्राणायामविधानम्। ततो नेउलीयोगविधिः, तत्र मुद्गद्विदलमिश्रितं कृसरान्नं सघृतं पक्वं भुञ्जीत। उदर-मध्यस्थ-कुलालचक्रवत् परिभ्रमणं कारयितव्यम्। एतदनु नाडीक्षालनं कार्यम्। सर्व-सिद्धिप्रदमेतद् नेउलीसाधनं मतम्।

**षट्त्रिंशे पटले** भगवत्याः कुण्डलीदेव्या अष्टाधिकसहस्रनामोल्लेखपूर्वकं स्तोत्रमुक्तम्। ऋषिश्छन्दोदेवतानां च निर्देशः कृतोऽस्ति।

> कुलक्षेत्रस्थिता कौली कुलीनार्थप्रकाशिनी।
> कुलाख्या कुलमार्गस्था कुलशास्त्रार्थपातिनी॥
> कुलज्ञा कुलयोग्या च कुलपुण्यप्रकाशिनी।
> कुलीना च कुलाध्यक्षा कुलचन्दनसेविता[1]॥

इत्येवमष्टोत्तरसहस्रनामस्तोत्रं जपित्वा कवचेनात्मरक्षा करणीया। तत्र—

> ई किं श्रीं कामकमला पातु कैलासरक्षिणी।
> मम श्री ईं बीजरूपा पातु काली शिरःस्थलम्॥
> पातु मे कर्णयुग्मं तु क्रौं क्रौं जीवकरालिनी।
> गण्डयुग्मं सदा पातु कुण्डली अङ्कवासिनी[2]॥

इत्यादिमन्त्रैरङ्गोपाङ्गरक्षणं विधेयम्। एतत्स्तवनपाठस्य कवचस्य च फलं कोटि-जन्माघनाशः।

**सप्तत्रिंशे पटले** पीताम्बरधरस्य वंशीनादध्वनिगुणपरस्य महाकालियदमन-परस्य भगवतः श्रीकृष्णस्य योगिराजराजेश्वरस्य विमलं ध्यानं निरूपितमस्ति। अन्ते च—

---

१. रु० या० ३६।८-९; २. तत्रैव—३६।१७१,१७५।

विना कृष्णपदाम्भोजं स्वाधिष्ठानं कुतो जयम् ।
कृष्णध्यानान्महापद्मभेदं प्राप्नोति शङ्कर[1] ॥

इत्येवं महापद्मभेदनं स्वाधिष्ठानभेदनं फलत्वेन प्रोक्तम् ।

**अष्टात्रिंशे पटले**ऽपि भगवतः श्रीकृष्णस्य ध्यानविधिर्विस्तरेण प्रोक्तः । एतत्पटलीयपञ्चमषष्ठश्लोकयोर्मध्ये ध्यानमन्त्रः सुगोपितो वर्तते । पुनश्च भगवतो नरसिंहस्यापि ध्यानमन्त्रः संकेतितोऽस्ति ।

प्रणवं पूर्वमुच्चार्य नान्तबीजं तथोद्गिरेत् ।
वह्निबीजसमालग्नमधोदन्तस्वरान्वितम् ॥
नादबिन्दुसमायुक्तं पुनर्वारद्वयं वदेत् ।
नरसिंहाय शब्दान्ते पुनर्वारत्रयं वदेत् ॥
देवीबीजं शक्तिबीजं स्वाहान्तं मनुमुद्गिरेत् ।
एतन्मन्त्रप्रयोगेण कुण्डलीवशमानयेत्[2] ॥

अनया रीत्या स्वाधिष्ठाने सिद्धिप्राप्त्या स्वात्मनि चिन्मये कृष्णे मनोलयं कुर्यात् ।

**एकोनचत्वारिंशे पटले** भगवतः श्रीकृष्णस्य स्तोत्रं कवचपद्धतिश्च विस्तरेण प्रोक्ताऽस्ति । यथा—

श्रीकृष्णं जगतामधीशमनघं ध्यानात् सिद्धिप्रदं
गोविन्दं भवसिन्धुपारकरणं सन्तारणं कारणम् ।
श्रीविष्णुं वनमालिनं नरहरिं नारायणं गोकुलं
योगेन्द्रं नरनाथमादिपुरुषं वृन्दावने भावयेत् ॥

मोक्षश्रीसहितं कृतान्तविकृतं धर्मार्णवं सुन्दरं
श्रीरामं बलरामभावविमलं नित्याकुलं सत्कुलम् ।
श्रीश्यामं कनकादिहारविलसल्लम्बोदरं श्रीधरं
तं वन्दे हरिमीश्वरं गुणवतीमायाश्रयं स्वाश्रयम्[3]॥

इत्येवं स्तोत्रं विधाय तदीयकवचमन्त्रेणात्मरक्षा कार्या । एतेन विधिना मासेनैव षड्दले सर्वसिद्धिप्राप्तिर्भवति ।

**चत्वारिंशे पटले** षड्गतं वर्णं भावयित्वा पृथक् पृथग् ध्यानं कुर्यात्, षट्पद्मस्थो नूनं भवेत् । ततश्च—

यावन्मूलाधारयोगं तावद् यमादिकं प्रभो ।
यमनियमासने काले योगं पञ्चामरान्वितम् ॥
तावत् कुर्यान्महादेव यावत्तत्सिद्धिमाप्नुयात् ।
यदि पञ्चामरासिद्धिस्तदा मायादिसिद्धिभाक् ॥

---

१. रु० या० ३७।३५; २. तत्रैव—३८।१५-१७; ३. तत्रैव—३९।८-९ ।

पञ्चासवा सिद्धिकाले प्राणादिवायुपञ्चमम् ।
धृत्वा धृत्वा पुनर्धृत्वा कुम्भयेदनिशं शनैः[1] ॥

अनया रीत्या शरीरस्य निर्मलतायां प्राणवायोर्नैर्मल्यं निश्चितं भवति ।

**एकचत्वारिंशे पटले** राकिणीदेव्या सहितस्य योगिराजश्रीकृष्णस्य स्तवनमुद्गीतमस्ति ।

या राकिणी त्रिजगतामुदयाय चेष्टा
संज्ञामयी कुलवती कुलवल्लभस्था ।
विश्वेश्वरी स्मरहरप्रियकर्मनिष्ठा
कृष्णप्रिया मम सुखं परिपातु देवी ॥
षड्वर्गनाथकरपद्मनिषेविता या
राधेश्वरी प्रियकरी सुरसुन्दरी सा ।
माता कुलेशजननी जगतां मनुस्था
विद्या परा रिपुहराऽवतु मे शरीरम्[2] ॥

अनया पद्धत्या स्तोत्रस्य कवचस्य च विस्तरेण निर्देशः कृतोऽस्ति ।

त्रिसन्ध्यं चेदमाकुर्यात् पठित्वा च पुनः पुनः ।
ध्यात्वा भावपरो भूत्वा मुच्यते भवबन्धनात् ॥
अचलां भक्तिमाप्नोति विश्वामित्रो यथा वशी ।
पठनात् पामरो याति ब्रह्मलोकं कुलाधिप[3] ! ॥

इत्येवं फलस्य निर्देशो द्रष्टव्यः ।

**द्विचत्वारिंशे पटले** राकिणीसमलङ्कृतस्य श्रीकृष्णस्य प्रीत्यै हवनतर्पणयोर्विधानम्, गुप्तमन्त्रस्य स्फुटं संकेतः, तर्पणान्तेऽभिषेकः, तदन्तेऽष्टाङ्गनतिभिः समर्चनम्, अष्टोत्तरसहस्रनामभिः स्तवनम् । तत्र स्तवन एकं नाम भगवतः श्रीकृष्णस्य, अपरं भगवत्या राधायाः (राकिण्याः) । यथा—

मुकुन्दो मालती माला विमला विमलाकृतिः ।
रमानाथो महादेवो महायोगी प्रभावती ॥
वैकुण्ठो देवजननी दहनो दहनप्रिया ।
दैत्यारिर्दैत्यमथिनी मुनीशो मौनभाविता ॥
नारायणो जयकला करुणो करुणामयी ।
हृषीकेशः कौशिकी च केशवः केशिघातिनी[4] ॥

एतत्स्तोत्रपाठेन किं फलम् ? तदुच्यते—

यः पठेत् प्रातरुत्थाय शुचिर्वाऽशुचिमानसः ।
भक्त्या शान्तिमवाप्नोति अनायासेन योगिराट् ॥

---

१. रु० या० ४०।१९-२१; २. तत्रैव—४१।२०-२१ ।
३. तत्रैव—४१।३८-३९; ४. तत्रैव—४२।१८-२० ।

अकालमृत्युहरणं सर्वव्याधिविनाशनम् ।
अपमृत्य्वादिहरणं वारमेकं पठेद् यदि[1] ॥

इत्यादिफलसङ्कीर्तनं विस्तरेण द्रष्टव्यम्। पुनश्च कैलासदर्शनादिफलकोऽष्टाङ्गसाधनविधिः प्रोक्तः ।

**त्रिचत्वारिंशे पटले** मणिपूरचक्रभेदनविधिः प्राचुर्य्येण निरूपितः । उक्तञ्च—

असाध्यसाधनं कर्म मणिपूरस्थनिर्मलम् ।
मणिपूरे महापीठे ध्यानगम्ये सति प्रभो ॥
मनो निवेशनं कृत्वा नरो मुच्येत सङ्कटात् ।
मनोयोगी मनोभोगी मनोभक्तो मनोयुवा ॥
महायन्त्रे मनो दत्त्वा निर्माणं कारयेद् बुधः ।
मणिभिर्ग्रथनं कृत्वा नानामणिविभूषितम् ॥
श्रीविद्यापीठमालिख्य विभाव्य च पुनः पुनः[2] ॥

तत्र भगवतो महारुद्रस्य ध्यानविधिर्निरूपितः । गन्ध-पुष्प-धूप-दीपादिभिः समर्चनविधिः । प्राणायामो भक्त्या ध्यानं मन्त्रजपश्च कार्यः ।

**चतुश्चत्वारिंशे पटले** प्राणायामपूर्वकं महापीठस्य मणिपूरस्य ध्यानेन पञ्चामराशवासिद्धिपूर्वकेण च किं न सिध्यति ? सर्वं सिध्यति इति भावः । हृदयपद्मस्याधोभागे ध्यानविधानेन योगिराड् रुद्रं महान्तं देवं प्रपश्यति, जीवन्मुक्तिसुखं च लभते ।

**पञ्चचत्वारिंशे पटले** वर्णध्यानस्य वैशिष्ट्यं प्रतिपादितमस्ति ।

पूर्वादिदलमारभ्य ध्यानं कुर्यात् पृथक् पृथक् ॥
डां डां डां डाकिनीं तां डमरुवररतां तारिणीं ताररूपां
डिं डिं डिं डामरस्थां डमरुडमगृहे डंकडिंकिं मनुस्थाम् ।
डं डं डं डामरेशीं डिमिडिमिडिमिगध्याननिर्माणडोरां
डों डों डों डाकडं डः प्रडुमडमुडां दाडिमामाश्रयामि[3]॥

इत्येवमादिवर्णध्यानमन्त्रनिर्देशः कृतोऽस्ति । अन्ते च पुनरपि ध्यानविधिं प्रतिपाद्य स्तोत्रफलं निर्दिष्टम् । तथा च—

वरहस्तां विशालाक्षीं चन्द्रावयवलक्षणाम्[4] ॥

इत्याद्यारभ्य—

अष्टादशभुजां श्यामां हस्तविद्युतिधारिणीम् ।
एवं ध्यात्वा पूजयित्वा रुद्राणीस्तोत्रमापठेत्[5] ॥

अनया रीत्या रुद्राणीस्तोत्रपाठाङ्गभूतो वर्णध्यानविधिः विस्तरेण निर्दिष्टोऽस्ति ।

---

१. रु० या० ४२।१३१, १३३; २. तत्रैव—४३।५३-५४, ५९-६० ।
३. तत्रैव—४५।४१-४२; ४. तत्रैव—४५।५३; ५. तत्रैव—४५।५८ ।

मान्या विद्वांसो निवेद्यन्ते यद्योगतन्त्रग्रन्थमालायां **सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन** रुद्रयामलस्योत्तरतन्त्रस्य नवतितमपटलान्तस्य प्रथमं संस्करणं प्रातः-स्मरणीयानां तदानीन्तनकुलपतिपदमधितिष्ठतां विद्वद्वरेण्यानां **श्रीमद्बदरीनाथशुक्ल-महोदयानां** सत्प्रेरणया सुसम्पन्नमभवत् । अधुनाऽस्य ग्रन्थस्य दौर्लभ्यमालक्ष्य पुनर्मुद्रणाय सन्नद्धेन सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन पञ्चचत्त्वारिंशपटलान्तः पूर्वभागः प्रकाश्य-मानोऽस्तीति परमं प्रमोदस्थानम् ।

**"श्रेयांसि बहु विघ्नानि"** इति वादसत्त्वेऽपि दुर्लभस्यास्य ग्रन्थस्याचिरप्रकाशने साम्प्रतिककुलपतिपदं सभाजयतां प्राच्यप्रतीच्योभयविधविद्यापारदृश्वनां महामनीषिणां **डॉ० श्रीविद्यानिवासमिश्र**महानुभावानां साधुप्रेरणैव महत्कारणम् । मान्या मिश्रमहोदयाः सर्वथा धन्यवादैः सत्क्रियन्ते ।

पुनश्चास्य ग्रन्थस्य प्रकाशने प्रकाशनाधिकारिणः **श्रीहरिश्चन्द्रमणित्रिपाठिनः**, प्राग्रूपसंशोधकस्य **श्रीहरिवंशकुमारपाण्डेयस्य**, तत्सहयोगिकर्मचारिणाम्, रत्नाप्रेस-सञ्चालकमहोदयानां **श्रीविनयशङ्करपण्ड्यानां** तत्रत्येतरकर्मचारिणाम्, अत्रत्याचार्योपा-चार्यादीनाम्, छात्राणां च सहयोगेन कठिनतरमपि एतत्कार्यं सम्पन्नतामलभत, तदर्थं ते सर्वे शुभाशीराशिभिः समेध्यन्ते ।

शिष्याणामध्यापनेन स्वयमपि शास्त्रचिन्तया च समयस्याल्पतया भ्रमाद् मुद्रणदोषाद्वा त्रुटयो नूनं सम्भाव्यन्ते, ताश्च यदि सुधीभिः सोसूच्यन्ते, तर्ह्यहं तदीयां कृतज्ञतामावक्ष्यामि । अन्ते च भगवन्तौ भवानीविश्वनाथौ प्रार्थये यत्तदीयानुग्रहेणैष विश्वविद्यालय ईदृशे महनीयकार्ये सर्वथा सर्वदा च तत्परतां भजेतेति स्वीयं हार्दं प्रकाशयति—

**वाराणस्याम्,**
वसन्तपञ्चम्याम्,
२०४७ वैक्रमेऽब्दे

**रामप्रसादत्रिपाठी**
सम्मानिताध्यापकः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणस्याम् ।

# विषयानुक्रमणिका

-: ❀ :-

॥ ॐ कालिकायै नमः ॥

# अथ रुद्रयामलम्

## [ उत्तरतन्त्रम् ]

### प्रथमः पटलः

**भैरव उवाच—**

परा श्रीपरमेशानीवदनाम्भोजनिःसृतम् ।
श्रीयामलं महातन्त्रं स्वतन्त्रं विष्णुयामलम् ॥ १ ॥

शक्तियामलमाख्यातं ब्रह्मणः स्तुतिहेतुना ।
ब्रह्मयामलवेदाङ्गं सर्वञ्च कथितं प्रिये ॥ २ ॥

इदानीमुत्तराकाण्डं वद श्रीरुद्रयामलम् ।
यदि भाग्यवशाद्देवि तव श्रीमुखपङ्कजे ॥ ३ ॥

यानि यानि स्वतन्त्राणि संदत्तानि महीतले ।
प्रकाशय महातन्त्रं नान्यतन्त्रेषु तृप्तिमान् ॥ ४ ॥

सर्ववेदान्तवेदेषु कथितव्यं ततः परम् ।
तदा ते भक्तवर्गाणां सिद्धिः सञ्चरते ध्रुवम् ॥ ५ ॥

यदि भक्ते दया भद्रे वद त्रिपुरसुन्दरि[1] ।
महाभैरववाक्यञ्च पङ्कजायतलोचना[2] ॥ ६ ॥

श्रुत्वोवाच महाकाली कथयामास भैरवम् ।

---

१. संबोधनविभक्त्यन्तमिति ह्रस्वान्तम् ।

२. पङ्कजानि इवायतलोचनानि यस्या इति बहुव्रीहिः । श्रुत्वा पङ्कजलोचना—क० ।

**भैरवो उवाच—**

शम्भो महात्मदर्पघ्न कामहीन कुलाकुल ॥ ७ ।

चन्द्रमण्डलशीर्षाक्ष हालाहलनिषेवक ।
अद्वितीयाघोरमूर्त्ते[1] रक्तवर्णशिखोज्ज्वल ॥ ८ ।

[2]महाऋषिपते देव सर्वेषाञ्च नमो नमः ।
सर्वेषां प्राणमथन शृणु आनन्दभैरव ॥ ९ ।

आदौ बालाभैरवीणां साधनं षट्कलात्मकम् ।
पश्चात् कुमारीललितासाधनं परमाद्भुतम् ॥ १० ।

कुरुकुल्लाविप्रचित्तासाधनं शक्तिसाधनम् ।
योगिनीखेचरीयज्ञकन्यकासाधनं ततः ॥ ११ ।

उन्मत्तभैरवीविद्या-कालीविद्यादिसाधनम् ।
पञ्चमुद्रासाधनञ्च पञ्चबाणादिसाधनम् ॥ १२ ।

प्रत्यङ्गिरासाधनञ्च कलौ साक्षात्करं परम् ।
हरितालिकास्वर्णविद्याधूम्रविद्यादिसाधनम् ॥ १३ ।

आकाशगङ्गा विविधा[3] कान्यकासाधनं ततः ।
भ्रूलतासाधनं[4] सिद्धसाधनं तदनन्तरम् ॥ १४ ।

उल्काविद्यासाधनं च पञ्चतारादिसाधनम् ।
अपराजितापुरुहूताचामुण्डासाधनं ततः ॥ १५ ।

कालिकासाधनं कौलसाधनं घनसाधनम् ।
चर्चिकासाधनं पश्चात् घर्घरासाधनं ततः ॥ १६ ।

---

१. अद्वितीया अघोरा मूर्तिर्यस्येति बहुब्रीहिः, स्त्रियाः पुंवदित्यादिना पुंवद्भावः ।

२. पतिः शिवः—ग० ।

३. विवुधा वालुकासाधनं ततः—क०, विवधा—ख० ।

४. भूतबलिसाधनं ततः—क० ।

विमलासाधनं रौद्री[1] त्रिपुरासाधनं ततः ।
सम्पत्प्रदासप्तकूटासाधनं [2]चेटीसाधनम् ।
शक्तिकूटादिषट्कूटानवकूटादिसाधनम् ॥ १७ ।

कनकाभाकान्चनाभावह्न्याभासाधनं ततः ।
वज्रकूटापन्चकूटासकलासाधनं ततः ॥ १८ ।

तारिणीसाधनं पश्चात् षोडशीसाधनं स्मृतम् ।
छिन्नादि-उग्रप्रचण्ड्यादिसाधनं सुमनोहरम् ॥ १९ ।

उल्कामुखीरक्तमुखीसाधनं वीरसाधनम् ।
नानाविधाननिर्माणशवसाधनमेव च ॥ २० ।

कृत्वा देवीसाध्नन्च कृत्वाहिसाधनं ततः ।
नक्षत्रविद्यापटलं कालीपटलमेव च ॥ २१ ।

श्मशानकालिकादेवीसाधनं भूतसाधनम् ।
रतिक्रीडासाधनन्च सुन्दरीसाधनं तथा ॥ २२ ।

महामालासाधनन्च महामायादिसाधनम् ।
भद्रकालीसाधनन्च नीलासाधनमेव च ॥ २३ ।

[3]भुवनेशीसाधनन्च दुर्गासाधनमेव च ।
वाराहीगारुडीचान्द्रीसाधनं परमाद्भुतम् ॥ २४ ।

---

१. संज्ञायामिति निषेधान्न पुंवद्भावः ।

२. त्रिकुटासाधनं ततः—क० ।

३. कामाख्यासाधनं भद्रे भानुमत्याश्च साधनम् ।
महारात्रिसाधनन्च सप्तमीसाधनं तथा ॥
पञ्चमीरोहिणीकुल्यासाधनं साभिचारकम् ।
अष्टमीविषमाषष्ठीकौशल्यासाधनं ततः ॥
विजयासाधनं मुद्रा देवीसाधनमेव च । इत्यधिकः पाठः—क० ।

ब्रह्माणीसाधनं पश्चाद् हंसीसाधनमुत्तमम् ।
माहेश्वरीसाधनञ्च कौमारीसाधनं तथा ।। २५ ।

वैष्णवीसाधनं धात्रीधनदारतिसाधनम् ।
[1]पञ्चाभ्राबलिपूर्णास्या नारसिंहीसुसाधनम् ।। २६ ।

[2]कालिन्दीरुक्मिणीविद्याराधाविद्यादिसाधनम् ।
गोपीश्वरीपद्मनेत्रापद्ममालादिसाधनम् ।। २७ ।

मुण्डमालासाधनञ्च भृङ्गारीसाधनं ततः ।
सकलाकर्षणीविद्याकपालिन्यादिसाधनम् ।। २८ ।

गुह्यकालीसाधनञ्च बँगलामुखीसाधनम् ।
[3]महाबालासाधनञ्च कलावत्यादिसाधनम् ।। २९ ।

कुलजाकलिकाकक्षाकुक्कुटीसाधनं महत् ।
चिञ्चादेवीसाधनञ्च शाङ्करीगूढसाधनम् ।। ३० ।

प्रफुल्लाब्जमुखीविद्याकाकिनीसाधनं ततः ।
कुब्जिकासाधनं नित्यासरस्वत्यादिसाधनम् ।। ३१ ।

भूर्लेखाशशिमुकुटा-उग्रकाल्यादिसाधनम् ।
[4]मणिद्वीपेश्वरीधात्रीसाधनं यज्ञसाधनम् ।। ३२ ।

---

१. पञ्चास्यबलिपूर्णास्या—क० ।

२. ऐन्द्रीघोरतराविद्यासाधनं रतिसाधनम् ।
वज्रज्वालासाधनञ्च चन्द्रदुर्गादिसाधनम् ।।
महाविद्यासाधनञ्च लक्ष्मीसाधनमेव च ।
शाकम्भरीसाधनञ्च भ्रामरीसाधनं तथा ।।
रक्तदण्डामहाविद्यापूर्वविद्यादिसाधनम् । इत्यधिकः पाठः—ख० ।

३. महाबला—क० ।

४. धात्री—ख० ।

केतकीकमलाकान्तिप्रदाभेद्यादिसाधनम्[1] ।
[2]वागीश्वरीमहाविद्या-[3]अन्नपूर्णादिसाधनम् ॥ ३३ ।

वज्रदण्डारक्तमयीमन्वारीसाधनं[4] तथा ।
हस्तिनीहस्तिकर्णाद्यामातङ्गीसाधनं ततः ॥ ३४ ।

परानन्दानन्दमयीसाधनं गतिसाधनम् ।
कामेश्वरीमहालज्जाज्वालिनीसाधनं वसोः ॥ ३५ ।

गौरीवेतालकङ्कालीवासवीसाधनं तथा ।
चन्द्रास्यासूर्यकिरणारटन्तीसाधनं ततः ॥ ३६ ।

किङ्किनी पावनीविद्या अवधूतेश्वरीति च ।
एतासां सिद्धविद्यानां साधनाद्रुद्र एव सः ॥ ३७ ।

अलकाकलियुगस्थाशक्तिटङ्कारसाधनम्[5] ।
हरिणीमोहिनीक्षिप्रातृष्यादिसाधनं तथा ॥ ३८ ।

अट्टहासाघोरनादामहामेधादिसाधनम् ।
वलरीकौरविण्यादिसाधनं परमाद्भुतम् ॥ ३९ ।

रङ्किणीसाधनं पश्चाद् नन्दकन्यादिसाधनम् ।
मन्दिरासाधनं कात्यायनीसाधनमेव च ॥ ४० ।

रजनीराजतीघोरासाधनं तालसाधनम् ।
पादुकासाधनं चित्तासाधनम् रविसाधनम् ॥ ४१ ।

मुनिनाथेश्वरीशान्तिवल्लभासाधनं तथा ।
मदिरासाधनं [6]वीरभद्रासाधनमेव हि ॥ ४२ ।

---

१. भैम्यादिसाधनम्—क० । २. शशीश्वरी—क० ।
३. पृषोदरादित्वात् प्रकृतिभावः । ४. मन्दारीसाधनं तथा—क० ।
५. कङ्कादिसाधनम्—क० । ६. वीरमुद्रा—क० ।

मुण्डालीकालिनीदैत्यदंशिनीसाधनं ततः ।
प्रविष्टवर्णालघिमामीनादिसाधनं महत् ।। ४३ ।

फेत्कारीसाधनं[1] भल्लातकीसाधनमद्भुतम् ।
उड्डीयानेश्वरीपूर्णागिरिजासाधनं तथा ।। ४४ ।

सौकरी[2] राजवशिनीदीर्घजङ्घादिसाधनम् ।
अयोध्यापूजितादेवीद्राविणीसाधनाद्भुतम् ।। ४५ ।

ज्वालामुखीसाधनञ्च कृष्णजिह्वादिसाधनम् ।
पञ्चवक्त्रप्रियाविद्यानन्तविद्यादिसाधनम् ।। ४६ ।

श्रीविद्याभुवनेशानीसाधनं कायसाधनम् ।
रक्तमालामहाचण्डीमहाज्वालादिसाधनम् ।। ४७ ।

[3]प्रक्षिप्तामन्त्रिकाकामपूजिताभक्तिसाधनम् ।
श्वासस्थावायवीप्राप्तालेलिहानादिसाधनम् ।। ४८ ।

भैरवीलसितापृथ्वीवाटुकीसाधनं तथा ।
अगम्या-[4]आकुलीमौलीन्द्राञ्जनमन्त्रसाधनम् ।। ४९ ।

कुलावतीकुलक्षिप्तारतिचीनादिसाधनम् ।
शिवाक्रोडादितरुणीनायिकामन्त्रसाधनम् ।। ५० ।

साधनं शैलवासिन्या अकस्मात् सिद्धिवर्धनम् ।
मन्त्रयन्त्रस्वतन्त्रादिपूज्यमानाः परात्पराः ।। ५१ ।

एताः सर्वाः कलियुगे कालिका हरकोमलाः ।
मन्त्राद्या येन सिद्ध्यन्ति सत्यं सत्यं न संशयः ।। ५२ ।

---

१. माकरीभल्लातकी—क० ।
२. कौमारीसाधनम्—क० ।
३. संपूजिता—क० ।
४. पृषोदरादिकल्पनया सन्ध्यभावः ।

महाकालशिवानन्दपरमानन्दपारगः ।
भक्तानामनुरागेण विद्यारत्नं पुनः श्रृणु ।। ५३ ।

आदौ वैष्णवदेवस्य मन्त्राणां नित्यसाधनम् ।
ततस्ते मङ्गलं मन्त्रसाधनं परमाद्भुतम् ।। ५४ ।

अकस्माद्विहिता सिद्धिर्येन सिद्ध्यति भूतले ।
बालभैरवयोगेन्द्रसाधनं शिवसाधनम् ।। ५५ ।

महाकालसाधनञ्च तथा रामेश्वरस्य च ।
अघोरमूर्त्ते रमणासाधनं श्रृणु यत्नतः ।। ५६ ।

क्रोधराजभूतराज-एकचक्रादिसाधनम् ।
गिरीन्द्रसाधनं पश्चात् कुलनाथस्य साधनम् ।। ५७ ।

वटुकेशादिश्रीकण्ठेशादिसाधनमेव च ।
मृत्युञ्जयस्य रौद्रस्य कालान्तकहरस्य[1] च ।। ५८ ।

उन्मत्तभैरवस्यापि तथा [2]पञ्चास्यकस्य च ।
कैलासेशस्य शम्भोश्च तथा शूलिन एव च ।। ५९ ।

भार्गवेशस्य सर्वस्य महाकालस्य साधनम् ।
सुरान्तकस्य पूर्णस्य तथा देवस्य शङ्कर ।। ६० ।

हरिद्रागणनाथस्य वरदेश्वरमालिनः ।
ऊर्ध्वकेशस्य धूम्रस्य जटिलस्यापि साधनम् ।। ६१ ।

आनन्दभैरवस्यापि बाणनाथस्य साधनम् ।
करीन्द्रस्य शुभाङ्गस्य हिल्लोलमर्द्दकस्य च ।। ६२ ।

पुष्पनाथेश्वरस्यापि वृषनाथस्य साधनम् ।
[3]अष्टमूर्त्तेः कालमूर्त्तेश्चन्द्रशेखरसाधनम् ।। ६३ ।

---

१. हरतीति हरः, कालान्तकस्य हर इति षष्ठीतत्पुरुषः ।

२. पञ्चकालस्य च—क० ।

३. कपिलेशस्य रुद्रस्य तथा पिङ्गाक्षकस्य च ।
दिगम्बरस्य सूक्ष्मस्य उपेन्द्रपूजितस्य च ।।
अवधूतेश्वरस्यापि अष्टवसोश्च साधनम् । इत्यधिकः पाठः—ख० ।

क्रमुकस्यापि घोरस्य कुबेराराधितस्य च ।
त्रिपुरान्तकमन्त्रस्य कमलाक्षस्य साधनम् ॥ ६४ ।

ईत्यादिसिद्धमन्त्राणां मन्त्रार्थं विविधं मुदा ।
उदितं तद्विशेषेण सुविस्तार्यं शृणुष्व तत् ॥ ६५ ।

इन्द्रादिदेवता सर्वा येन सिद्धयन्ति भूतले ।
तत्प्रकारं महादेव सावधानोऽवधारय ॥ ६६ ।

[१]उपविद्यासाधनञ्च मन्त्राणि विविधानि च ।
नानाकर्माणि धर्माणि षट्कर्मसाधनानि च ॥ ६७ ।

श्रीरामसाधनं यज्ञसाधनं योगसाधनम् ।
सर्वविद्यासाधनञ्च राजज्वालादिसाधनम् ॥ ६८ ।

मन्त्रसिद्धिप्रकारञ्च हनुमत्साधनादिकम् ।
विषज्वालासाधनञ्च पातालकोकसाधनम् ॥ ६९ ।

भूतलिपिप्रकारञ्च तत्तत्साधनमेव च ।
नवकन्यासाधनञ्च अष्टसिद्धिप्रकारकम् ॥ ७० ।

आसनानि च अङ्गानि साधनानि बहूनि च ।
कात्यायनीसाधनानि चेटीसाधनमेव च ॥ ७१ ।

कृष्णमार्जारसिद्धिश्च खड्गसिद्धिस्ततः परम् ।
पादुकाजङ्घसिद्धिश्च निजजिह्वादिसाधनम् ॥ ७२ ।

संस्कारगुटिकासिद्धिः खेचरीसिद्धिरेव च ।
भूप्रवेशप्रकारत्वं नित्यतुङ्गादिसाधनम् ॥ ७३ ।

स्तम्भनं दारुणं पश्चादाकर्षणं मुनेरपि ।
नानाविधानि देवेश औषधादीनि यानि च ॥ ७४ ।

हरितालादिसिद्धिश्च रसपारदसाधनम् ।
नानारससमुद्भूतं रसभस्मादिसाधनम् ॥ ७५ ।

---

१. विद्यामुपगता उपविद्या, अपराविद्या ।

वृद्धस्य तरुणाकारं साधनं परमाद्भुतम् ।
वैजयन्तीसाधनञ्च चरित्रं वासकस्य च ॥ ७६ ।

शिवाचरित्रमश्वस्य चरित्रं वायसस्य च ।
कुमारीणां प्रकारन्तु वस्त्राणां वारणं तथा ॥ ७७ ।

सम्पत्तिसाधनं देशसाधनं कामसाधनम् ।
गुरुपूजाविधानञ्च गुरुसन्तोषसाधनम् ॥ ७८ ।

निजदेवाराधनञ्च निजसाधनमेव च ।
वारुणीपैष्टिकीगौडीकैतकीमाध्विसाधनम् ॥ ७९ ।

स्वदेहगमनं स्वर्गे मर्त्ये मर्त्यैश्च दुर्लभम् ।
शरीरवर्धनञ्चैव कृष्णभावस्य साधनम् ॥ ८० ।

नयनाकर्षणञ्चैव कालसर्पस्य दर्शनम् ।
रणक्षोभप्रकारञ्च पञ्चेन्द्रियनिवारणम् ॥ ८१ ।

योगविद्यासाधनञ्च भक्षप्रस्थनिरूपणम् ।
चान्द्रायणव्रतञ्चैव[1] शृणु तद्योगसिद्धये ॥ ८२ ।

यामलाग्रेण शंसन्ति यानि सर्वाणि कानि च ।
ब्रह्माण्डे यानि वस्तूनि सर्वत्र दुर्लभं शिवम् ॥ ८३ ।

येऽभ्यस्यन्ति महातन्त्रं बालाद्वा मन्त्रतोऽपि वा ।
यामलं मम वक्त्राम्भोरुहसुन्दरसंभवम् ॥ ८४ ।

अतिगुह्यं महागुह्यं शब्दगुह्यं निराकुलम् ।
नानासिद्धिसमुद्राणां गृहं योगमयं[2] शुभम् ॥ ८५ ।

शास्त्रजालस्य सारं हि नानामन्त्रमयं प्रियम्[3] ।
वाराणसीपुरपतेः सदामोदं सुखास्पदम् ॥ ८६ ।

---

१. चान्द्रायणव्रतं द्विविधम्, यवचान्द्रायण-पिपीलिकाचान्द्रायणभेदात् ।
आद्यं पूर्णिमोत्तरप्रतिपत्तिथित आरभ्यते, द्वितीयममावास्योत्तरप्रतिपत्तिथितः ।

२. योगालयम्—क० । ३. प्रिये—क० ।

सरस्वतीदैवतं यत्[1] कालीषु शिखरे वृतम् ।
महामोक्षं द्वारमोक्षं सर्वसंकेतशोभितम् ।। ८७ ।

वाञ्छाकल्पद्रुमं तन्त्रं शिवसंस्कारसंस्कृतम् ।
अप्रकाश्यं क्रियासारं सहस्रस्तुतिराजितम् ।। ८८ ।

अष्टोत्तरशतं नाम सहस्रनाममङ्गलम् ।
नानाद्रव्यसाधनादिविधृताञ्जनरञ्जितम् ।। ८९ ।

कालीप्रत्यक्षकथनं कालीषोढादिसंपुटम् ।
महाचमत्कारकरं स्थितिसंहारपालकम् ।। ९० ।

अष्टादशप्रकारश्च षोढायाः सौख्यमुक्तये ।
ये जानन्ति महाकालं[2] यामलं कलिपावनम् ।। ९१ ।

आब्रह्मस्तम्बपर्यन्तं करे तस्य न संशयः ।
तत्प्रकारमहं वक्ष्ये निगमागममङ्गलम्[3] ।। ९२ ।

यस्माद्रुद्रो भवेज्ज्ञानी नानातन्त्रार्थपारगः ।
यामिनीविहितं कर्म कुलतन्त्राभिसाधनम् ।। ९३ ।

[4]महावीरहितं यस्मात् पञ्चतत्त्वस्वरूपकम् ।
लङ्घनं नास्ति मे नाथ[5] अस्मिन् तन्त्रे सुगोपनम् ।। ९४ ।

ततो यामलमाख्यातं चन्द्रशेखर शङ्कर ।
रुद्राक्षं साधनोत्कृष्टं शतयागफलप्रदम् ।। ९५ ।।

मनःसन्तोषविपुलं यामलं परिकीर्त्तितम् ।
रुरुकादिभैरवाणां ब्राह्मीदेव्याश्च[6] साधनम् ।। ९६ ।

---

१. तत् कालीस्व शिखावृतम्—क० ।
२. समस्यमानमिदं पदम्, षष्ठीतत्पुरुषोऽत्र ।
३. सङ्कुलम्—क० ।
४. मकारविहितं—क० ।
५. यस्मिन् तन्त्रे सुगोपेन—क० ।
६. संज्ञायामिति पुंवद्भावनिषेधः ।

[1]जाम्बूनदलताकोटिहेमदासाधनं यतः ।
मनसासाधनं यत्र लङ्कालक्ष्मीप्रसाधनम् ।। ९७ ।

देवतानाञ्च कवचं नानाध्यानव्रतं महत् ।
अन्तर्यागविधानानि कलिकालफलानि च ।। ९८ ।

भाति यत्नप्रभाकारं प्रायश्चित्तविमर्षणम् ।
पटलं त्रिंशता व्याप्तं ये पठन्ति निरन्तरम् ।। ९९ ।।

अवश्यं सिद्धिमाप्नोति यद्यदिच्छति भूतले ।
कर्मणा मनसा वाचा महातन्त्रस्य साधनम् ।। १०० ।

करोति कमलानाथकरपद्मनिषेवितम् ।
ज्ञात्वा [2]सर्वधरं तन्त्रं [3]सम्पूर्णं लोकमण्डले ।। १०१ ।।

प्राप्नोति साधकः सिद्धिं मासादेव न संशयः ।
नानाचक्रस्य माहात्म्यं नानाङ्कमण्डलावृतम् ।। १०२ ।

सर्वज्ञसिद्धिशतकं खण्डकालीकुलालयम् ।
तरुणादित्यसंकाशं वनमालाविभूषितम् ।। १०३ ।

दैवतं परमं हंसं कालकूटाशिनं प्रभुम् ।
आदौ ध्यात्वा पूजयित्वा नमस्कुर्याद् [4]महेश्वरम् ।।

प्रथमारुणसंकाशं रत्नालङ्कारभूषितम् ।
वरदं वारुणीमत्तं परमहंसं नमाम्यहम् ।। १०४ ।

**भैरव उवाच—**

यदि न पठ्यते तन्त्रं यामलं सर्वशङ्करम् ।
तदा केन प्रकारेण साधकः सिद्धिभाग्भवेत् ।। १०५ ।

---

१. जाम्बूनदतुलाकोटि—क० । २. सर्वेश्वरम्—क० ।
३. संपूर्णे—क० । ४. कलेश्वरम्—क० ख० ।

केचिच्च बुद्धिहीनाश्च मेधाहीनाश्च ये जनाः ।
मन्दभाग्याश्च धूर्ताश्च मूढाः सर्वापदावृताः ॥ १०६ ।

प्राप्नुवन्ति कथं सिद्धिं दया जाता कथं वद ।
तेषु मूर्खेषु हीनेषु शास्त्रार्थवर्जितेषु च ॥ १०७ ।

ज्ञानं भवति केनैव निर्मलं द्वैतवर्जितम् ।
तत्प्रकारं वद स्नेहाद् लोकानां [१]पुण्यवृद्धये ॥ १०८ ॥

**भैरवी उवाच—**

कर्मसूत्रं यश्छिनत्ति प्रत्यहं तनुसंस्थितः ।
स पश्यति जगन्नाथ मम श्रीचरणाम्बुजम् ॥ १०९ ॥

विश्वमावेशसंस्कारभिन्नबुद्धिक्रियान्विताः ।
अतो मां नहि जानन्ति नानाकार्योत्कटावृताः ॥ ११० ।

तेषां शरीरं गृह्णाति कालदूतो भयानकः ।
यः करोति महायोगं त्यागसन्न्यासधर्मवान् ॥ १११ ।

मन्दभाग्यः पशोर्योनिं प्राप्नोति मां विहाय सः ।
मयि भावं यः करोति दुर्लभो जनवल्लभः ॥ ११२ ।

भावेन लभ्यते सर्वं भावेन देवदर्शनम् ।
भावेन परमं ज्ञानं तस्माद् भावावलम्बनम् ॥ ११३ ।

भावश्च सर्वशास्त्राणां गूढं सर्वेन्द्रियस्थितम् ।
सर्वेषां मूलभूतश्च देवीभावं यदा [२]लभेत् ॥ ११४ ।

तदैव सर्वसिद्धिश्च तदा ध्यानदृढो भवेत् ।
अकलङ्की निराहारी निवासधृतमानसः[३] ॥ ११५ ।

नित्यस्नानाभिपूजाङ्गो भावी भावं यदा लभेत् ।
क्रियादक्षो महाशिक्षानिपुणोऽपि जितेन्द्रियः ॥ ११६ ।

---

१. अनुदात्तेत्वलक्षणमात्मनेपदमनित्यमिति कृत्वा परस्मैपदम् ।

२. सुखवृद्धये—क० ।

३. निराज्ञावृतमानसः—क० ।

स आयाति[1] मम पदं जीवनमुक्तः [2]स वासवः ।
आसवेन समांसेन कुलवह्नौ महानिशि ॥ २०० ।

नाम प्रत्येकमुच्चार्यं[3] जुहुयात् कायसिद्धये ।
पञ्चाचाररतो भूत्वा ऊर्द्ध्वरेता भवेद्यतिः[4] ॥ २०१ ।

संवत्सरान्मम स्थाने आयाति नात्र संशयः ।
ऐहिके कायसिद्धिः स्यात् देहिके सर्वसिद्धिदः ॥ २०२ ।

वशी भूत्वा त्रिमार्गस्थाः स्वर्गभूतलवासिनः ।
अस्य भृत्याः प्रभवन्ति इन्द्रादिलोकपालकाः ॥ २०३ ।

स एव योगी परमो [5]यस्यार्थेऽयं सुनिश्चलः ।
स एव खेचरो भक्तो नारदादिशुकोपमः ॥ २०४ ।

यो लोकः प्रजपत्येवं[6] स शिवो न च मानुषः ।
स समाधिगतो नित्यो ध्यानस्थो योगिवल्लभः ॥ २०५ ।

चतुर्व्यूहगतो देवः सहसा नात्र संशयः ।
यः प्रधारयते भक्त्या कण्ठे वा मस्तके भुजे ॥ २०६ ।

स भवेत् कालिकापुत्रो विद्यानाथः स्वयंभुवि ।
धनेशः पुत्रवान् योगी यतीशः सर्वगो भवेत् ॥ २०७ ।

वामा वामकरे धृत्वा सर्वसिद्धीश्वरो[7] भवेत् ॥ २०८ ।

यदि पठति मनुष्यो मानुषी वा महत्या
सकलधनजनेशी पुत्रिणी जीववत्सा ।
कुलपतिरिह लोके स्वर्गमोक्षैकहेतुः
स भवति भवनाथो योगिनीवल्लभेशः[8] ॥ २०९ ।

---

१. समामाति-ग० । २. स मानवः-ग० । ३. प्रत्यक्-क० ।
४. यदि-ग० । ५. यस्यार्थेऽहं सुनिश्चला-क० । ६. प्रजिहोत्येवम्-ग० ।
७. सर्वासां सिद्धीनामीश्वरः इति तात्पर्यम् ।
८. योगिनीनां वल्लभः, स चासौ ईशश्चेति विग्रहः ।

पठति य इह नित्यं भक्तिभावेन[1] मर्त्यो
हरणमपि करोति प्राणविप्राणयोगः ।
स्तवनपठनपुण्यं कोटिजन्माघनाशं
[2]कथितुमपि न शक्तोऽहं महामांसभक्षा । २१० ।

॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे
षट्चक्रप्रकाशे भैरवीभैरवसंवादे महाकुलकुण्डलिनी
अष्टोत्तरसहस्रनामस्तवकवचं नाम
षट्त्रिंशत्तमः पटलः[3] ॥

●

१. योगः–ग० ।

२. सर्वे चौरादिका विकल्पितणिजन्ता इति पक्षे इदं रूपम् ।

३. अत्रेदं धेयम् । ग० पुस्तके पञ्चत्रिंशत् पटलानन्तरं पट्त्रिंशदिति भ्रान्त्या लिखितम् । एतेन ग० पुस्तके षट्त्रिंशदिति सप्तत्रिंशदिति पटलद्वयस्याभावो लक्ष्यते ।

## अथ सप्तत्रिंशः पटलः

**आनन्दभैरव उवाच—**

श्रुतञ्च परमं ज्ञानं धर्माधर्मविवेचनम् ।
सर्ववेदान्तसारं च सारात्सारं परात्परम् ॥ १ ॥

कुण्डलीस्तवनं श्रुत्वा पूर्णोऽहं जगदीश्वरि ।
इदानीं श्रोतुमिच्छामि स्वाधिष्ठानं प्रकाशकम् ॥ २ ॥

यदि मे सुकृपादृष्टिरानन्दघनसञ्चये ।
वद श्रीकुण्डलीयोगं स्वाधिष्ठानविभेदनम् ॥ ३ ॥

येन क्रमेण भेदं स्यात्तत्प्रकारं विनिर्णय ।

**आनन्दभैरवी उवाच—**

महाकाल महावीर आनन्दसागरप्रिय[1] ॥ ४ ॥

योग्योऽसि योगमार्गाणामत[2] एव प्रकथ्यते ।
येन क्रमेण चक्रस्य भेदः स्यादमरो भवेत् ॥ ५ ॥

अमरो जितचित्तारिः क्रोधजित् प्रबलो बली[3] ।
धर्माधर्मज्ञानवांश्च[4] योगी भवति सज्जनः ॥ ६ ॥

[5]परकालदर्शी विज्ञः स्यात् क्रतुश्रद्धापरायणः ।
[6]अहंकारविहीनो यः स योगी भवति ध्रुवम् ॥ ७ ॥

---

१. आश्रय–ग० ।
२. वर्गाणाम्–क० ।
३. पावनो वशी–क० ।
४. ज्ञानरतो–क० ।
५. परं कालं पश्यति तच्छीलः परकालदर्शी ।
६. अहंकारेण विहीन इति तृतीयातत्पुरुषः ।

महावीरसुसङ्गिनी च सङ्गदोषविवर्जितः ।
महात्मापरमं ब्रह्मज्ञानी भवति योगिराट् ॥ ८ ।

विख्यातः सर्वदेशे च किन्तु स्वाश्रयवर्जितः ।
बालको विक्रमी धन्वी धनुर्बाणधरोऽव्ययः ॥ ९ ।

स भवेत् योगमार्गेशो विवेकी [1]पापवर्जितः ।
अविद्याग्रन्थिनिश्चेष्टो विवेकधर्मचातकः ॥ १० ।

चतुरो विषमज्ञानवर्जितो यज्ञकृत् शुचिः ।
स भवेद् योगिनीपुत्रो योगानामधिपो भवेत् ॥ ११ ।

यदि योगस्थितो मन्त्री वायवोशक्तिनिर्भरः ।
स एव योगी षण्मासादिति मे तन्त्रनिर्णयः ॥ १२ ।

यो मे तन्त्राणि जानाति सदर्थज्ञानजानि च ।
स एव चतुरो योगी मम भक्तो न संशयः ॥ १३ ।

यदि वायुपानरतो मन्त्री भवति साधकः ॥ १४ ।

अथ स्वाधिष्ठानं कुलवरगतं षड्दलगतं
प्रभाकारं विष्णोरतिशयपदं कामनिलयम् ।
महायोगेन्द्राणां मनसि [2]निलयं चारुकिरणं
शरच्चन्द्रज्योत्स्नायुतमतिधनं भव्यविषयम् ॥ १५ ।

[3]सदाभावक्षेत्रे सकलसुधियो वेद...
यदामापक्षेमे सकलसुधियो वेदपथगाः ।
[4]विचारं कुर्वन्ति [5]क्षितिगतरताः श्रीप्रभृतयः
महाविष्णोः पीताम्बर [6]नरपते श्यामलतनोः ।
(प्रकाशस्यान्तःपटस्थ नटवरस्यातिनिलयम्)
[7]विटच्छायामध्ये निवसति यथा गोकुलकुले[8] ॥ १६ ।

---

१. पाक–ग० । २. निचयम्–ग० । ३. सदा भावक्षेत्रे–ग० ।
४. ये कुवक्ति–ग० । ५. व्रता–ग० । ६. नवगतः–ग० ।
७. विटपच्छायामध्ये इति युक्तः पाठो मन्तव्यः । ८. गवां कुलं गोकुलम्, पुनश्च तस्य कुलम् ।

हरिध्यानं कुर्यान्निरवधिमहानन्दरसिकः
स एवात्मा साक्षादिह नव[1]वरः षोडशयुवा ।
महासर्पारिस्थं[2] स्थितिकरणगं[3] नागगमनं
मुखं [4]वंशीनादध्वनिगुणधरं भावयति कः ॥ १७ ।

स एवात्मा नित्यो यतिरिह [5]दले कोमलकुले[6]
कुलागारे सारे सरसिजयुते षड्दलवरे ।
सुरानन्दश्रीदं दिवि [7]दमनकर्त्तारममदं
सुधाकान्तं कृष्णं परमपुरुषं भावयति कः ॥ १८ ।

महाविद्यासिद्धं कुल[8]पतिमनोमान्ययजितं
मुकुन्दं श्रीकृष्णं रसदलगतं स्वागम[9]गतं ।
मुरारिं पापारिं नवयुवतिहृत्पद्मसुगतं
हृषीकेशं विष्णुं विषयकरणं भावयति कः ॥ १९ ।

स [10]योगेन्द्रो ज्ञानी जयति सुकृतौ कौतुकवतां
रमेशं श्रीकृष्णं रसविषहरं मानसचरम् ।
सरस्वत्या युक्तं कुलरसमयं मुक्तिजडितं
भजेच्चैतन्यान्तं [11]सुरगुरुवरं मोक्षमयते[12] ॥ २० ।

यतीन्द्रः सश्रीकः प्रचयति निजं भाव्यविषयं
पुराणं योगीन्द्रं हरिमखिलपं कामनिलयम् ।
महासूक्ष्मं[13] द्वारं कुलवधुरतं वामकिरणं
विशालाक्षं कृष्णं निजरसकुले कान्तममरम्[14]॥ २१ ।

---

१. नयः—ग० । २. सर्पाविस्थम्—ग० । ३. करणगण—ग० ।

४. ········शीलादध्वनि गुणधरं भावयति कः इति—ग० । ५. क्षणे—ग० ।

६. दले—ग० । ७. दवन—ग० । ८. ····रति मनो—ग० ।

९. दल—ग० । १०. योगेभ्यो—क० । ११. तरुकरम् ।

१२. मोक्षमतये—ग० । —मोक्षे या मतिस्तस्यै इत्यर्थः । मोक्षमयते इति पाठे तु मोक्षम् अयते इति पदच्छेदः ।

१३. महासूक्ष्मोदारम्—ग० । १४. कान्तमरतम्—ग० ।

कृपासाक्षीज्ञानं गुणगदितदेहं दाहरहितं
महाशैलं[1] सत्यं कुवलयकरिं हन्ति मरणम् ।
अघावीशं श्रीशं शशिमुखिकराम्भोजयजितं
तमात्मानं कृष्णं निजकुलदले योऽपि [2]भजति ॥ २२ ।

महाशब्दोत्पन्नं प्रकृतिविकृतिं कारणकृतिं
कृपासिन्धुं कृष्णं कुलवधूशतामोदमिलितम् ।
जगन्नाथं स्तौति क्षितिपतिवशायोपकरणं[3]
विराटं ब्रह्माण्डं [4]करणगमहाविष्णुमरणम् ॥ २३ ।

विनोदं [5]व्याकर्तुं त्रिभुवनपतिः श्रीपतिरहो
प्रचण्डे संसारे [6]उदयति सदाभावसदने ।
महामेघश्यामस्त्रिफल[7]करुणासागरकुले
अमूल्ये [8]सञ्चारे विषयरसनासञ्चयविषम् ॥ २४ ।

स कृष्णः श्रीविष्णुः प्रकृतिगदया हन्ति [9]सततं
[10]अतः कृष्णो ध्येयः सुरनरगणैः पञ्चसुमुखैः[11] ।
कुलाम्भोजे षट्के मनरसदले ध्यानफलितः
किराती राकिण्या नयनकमलापानमधुरम् ॥ २५ ।

धराधारं पूर्णं गगननिलयं कालपुरुषं
मनोगम्यं रम्यं नवनयनलावण्यरसिकम् ।
सदा ध्यायेत् कृष्णं कुरुगणरिपुं यः कुलपतिः
निरालम्बः श्यामः प्रकृतियमुनातीरतरुगः[12] ॥ २६ ।

---

१. कैतम्–ग० ।   २. भवति–ग० ।
३. करणात्–ग० ।   ४. करणप–ग० ।
५. व्यावर्त्य–ग० ।   ६. तदयति–ग० ।
७. पथ–ग० ।   ८. संसारे–ग० ।
९. मरण–ग० ।   १०. अथो–ग० ।
११. समुखैः–ग० । —पञ्चसुमुखैरिति पाठे तु पञ्च सुमुखानि येषां तैरिति विग्रहः कार्यः ।
१२. तरुपः–ग० ।

कुलीना गोपीभिः परिमिलितपार्श्वस्थलसुखः
प्रधानः क्षेत्रज्ञः [1]क्षितिपतिकराम्भोजयजितः ।
प्रकाशात्मा नाथः प्रचयकरुणो ध्येय इरया[2]
मनोधर्मं च्छत्रं त्रिविधगुणगानाश्रितकरम् ॥ २७ ।

त्रिकाण्डस्थं[3] खण्डोद्भववनरसं प्राणरसिकं
यदा स्तौति प्रातः समयमफले चारुवरदम् ।
महामोक्षक्षेत्रं कुलवधुयुतं कृष्णपरमं
गुणेशं राधेशं[4] रजनिव्रिधुनितं[5] वेदनिलयम् ॥ २८ ।

क्रियादक्षं सूक्ष्मं समयगुणयो[6]गाङ्कजडितं
त्रिकोणस्थं गङ्गाजलगलितसारं तारकतनुम् ।
[7]महाकालानन्दं गगनघनवर्णं सजलकं
प्रभावारं [8]भावं तरुणनववपुः श्रीधरमलम्[9] ॥ २९ ।

[10]वनोत्फुलाम्भोजा मनविरचना भालकलया
महाशोभारूपं कुलपुरुषगं व्याश्रयति[11] यः ।
स योगी संसारे भवति रसनायोगनिरतः
मनो यो व्याधाय प्रचुरफलदं कृष्णमखिलम् ॥ ३० ।

महाज्ञानोत्साहं गतिगुणवहिः प्राणनिचयं
जगत्तारं ब्रह्म [12]निरवधिमहायोगकिरणम् ।
यदालोकस्तौति प्रतिदिनमिहानन्दघटितं
विकारं सर्वेषां ग्रहणनिलनं भास्करविधोः ॥ ३१ ।

---

१. जनितः–ग० । २. हरयः–ग० ।

३. त्रिकामस्यं स्वर्णोद्भव–ग० । ४. व्याधेशम्–ग० ।

५. ब्रजनिधियुगम्–ग० । —व्रजन्ति गावो यस्मिन् स व्रजः, तस्य निधिः, तत्र युगम्, युगलम् ।

६. योगयाग–ग० । ७. तारम्–ग० । ८. कहाकालेनानन्दो यस्य तम् ।

९. श्रीघरमणम्–ग० । १०. वलोत्फुल्लाम्भोजमल विवचनाभान–ग० ।

११. व्याग्रयतिजे–ग० । १२. घोर–ग० ।

महाराहुग्रासं [1]शतशतमहापुण्यनिकरं
कुलानन्दं विष्णुं शशिशत[2]घटारामकिरणम् ।
मनोगम्यं सूक्ष्मं त्रिगुणजडितं भावयति कः ॥ ३२ ।

कृष्णभक्ति मुदा कृष्णं ध्यात्त्वा कृत्त्वा यतिर्भवेत् ।
श्रीकृष्णचरणाम्भोजे तस्य भक्तिर्न संशयः ॥ ३३ ।

कृष्णब्रह्म कृष्णब्रह्मा च त्रिध्यानपरायणः ।
स कृष्णस्तं जनं नीत्त्वा ददाति अपि शंकर ॥ ३४ ।

विना कृष्णपदाम्भोजं स्वाधिष्ठानं [3]कुतो जयम् ।
कृष्णध्यानान्महापद्मभेदं प्राप्नोति शंकर ॥ ३५ ।

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने षट्चक्रप्रकाशे भैरवीभैरवसंवादे स्वाधिष्ठान-श्रीकृष्णराकिणीसाधनं नाम सप्तत्रिंशत्तमः पटलः ॥**

●

---

१. शतस्य शतं तत्संख्याकानि महापुण्यानि तेषां निकरम् ।

२. धाम–ग० । ३. यजेत्–ग० ।

# अथाष्टात्रिंशः पटलः

**आनन्दभैरवी उवाच—**

श्रृणु नाथ प्रवक्ष्यामि श्रीकृष्णसाधनोत्तमम् ।
येन क्रमेण भक्तिः स्यात्कालजालवशो भवेत् ॥ १ ॥

मम पादाम्बुजे भक्तिर्भवत्येव न संशयः ।
भक्तिमान् यः साधकेन्द्रो महाविष्णुं भजेद्यदि ॥ २ ॥

शिवतुल्यो भवेन्नाथ मम भक्तो महीतले ॥ ३ ॥

श्रीकृष्णं जगदीश्वरं त्रिजगतामानन्दमोक्षात्मकं
सम्पूर्णं त्रिगुणावृतं गुणधरं सत्त्वाधिदैवं परम् ।
लिङ्गाधःस्थितिराज्यपालपुरुषं पञ्चाननस्थायिनं
श्रीविष्णुं शुभदं जनो यदि भजेल्लोकः सशक्ति [1]सुखी ॥ ४ ॥

आदौ कामं त्रिसर्गं कुलवधनियुतं कामबीजं त्रिसर्गं
श्रीकृष्णं वारयुग्मं प्रणययुगलकं चन्द्रिकाकाशयुक्तम् ।
ब्रह्मद्वन्द्वं भजामि प्रकृतिपुरुषिकां काकिनीं तत्परे च
भूयो भूयो भजामि श्रवणगलयनं वह्निजायाविलग्नम् ॥ ५ ॥

एतन्मन्त्रं जपित्वा प्रणवमिति नमोऽन्तं तथाद्ये मिलित्त्वा
भूयो भूयो [2]नमोऽन्तं त्रिभुवनसहितं क्षोभयेत्तत् क्षणेन ।
राजश्रीस्तस्य शीर्षे निरवधि वसुधा मन्दिरे [3]संस्थिरा स्यात्
कालच्छेदं प्रकृत्य प्रवसति सुमुखी ब्रह्मदण्डे च काले ॥ ६ ॥

ततः प्राणे दैवनाथ मम सन्तोषवर्द्धन[4] ।
इदानीं नरसिंहस्य मन्त्रं श्रृणु महाप्रभो ॥ ७ ॥

---

१. सुधीः—ग० । २. मनस्थ—ग० ।

३. संशिवा-ग० । —सम्यक् शिवं कल्याणं यस्याः सा इति बहुव्रीहिः ।

४. सन्तोषं वर्धयति इति, ण्यन्ताद् वृधुधातोः बाहुलकात् कर्तरि ल्युट्प्रत्ययः ।

कान्तबीजं समुद्धृत्य युगलं युगलं स्मृतम् ।
महानृसिंहमन्त्रे पूजयामि नमो नमः ॥ ८ ।

स्वाधिष्ठाने महापद्मे मनोनिष्पापहेतुना ।
मनो विधाय यो योगी जपेन्मन्त्रं पुनः पुनः ॥ ९ ।

एतन्मन्त्रजपेनापि सिद्धो भवति साधकः ।
एतन्मन्त्रप्रभावेण भावसिद्धिं क्षणाल्लभेत् ॥ १० ।

साधको यदि भूमिस्थः साधयेत्तु हरेर्मनुम् ।
[1]रेणुसंख्या क्रमेणैव सिद्धिं प्राप्नोति [2]वीर्यतः ॥ ११ ।

अथ वक्ष्ये महादेव सर्ववर्णसुसारकम् ।
वर्णमालास्वसंशक्तो जप्त्वा सिद्धिमवाप्नुयात् ॥ १२ ।

सिद्धिमन्त्रं प्रार्थयते यदि मर्त्यो निराश्रयः ।
निर्जने [3]संस्थिरो भूत्वा एकाकी [4]दीपवर्जितः ॥ १३ ।

निःशङ्कं प्रजपेन्मन्त्रं स्वाधिष्ठानाब्ज[5]सङ्गते ।
वशीकृतं जगत्सर्वं येन तत्क्रममाश्रृणु ॥ १४ ।

प्रणवं पूर्वमुच्चार्यं नान्तबीजं तथोद्‌गरेत् ।
वह्निबीजसमालग्नमधोदन्तस्वरान्वितम् ॥ १५ ।

[6]नादबिन्दुसमायुक्तं पुनर्वारद्वयं वदेत् ।
[7]नरसिंहाय शब्दान्ते पुनर्वारत्रयं वदेत् ॥ १६ ।

देवीबीजं शक्तिबीजं स्वाहान्तं मनुमुद्‌गरेत् ।
एतन्मन्त्रप्रयोगेण कुण्डलीवशमानयेत् ॥ १७ ।

स्वाधिष्ठाने स्थिरीभावं प्राप्नोति साधकाग्रणीः ।
सर्वेषां प्राणगो भूत्वा प्रबलोऽसौ महीतले ॥ १८ ।

---

१. एवमेव–ग० । २. धैर्यतः–ग० । ३. सुस्थिरो–ग० ।
४. दिग इति–ग० । ५. सद्वशात्–ग० ।
६. नादश्च बिन्दुश्च नादबिन्दू, ताभ्यां समायुक्तम् । द्वन्द्वगर्भस्तृतीयातत्पुरुषः ।
७. नर्रसिंह–ग० ।

शीतं रौद्रं समं तस्य पापापापं जयाजयम् ।
धर्माधर्मः सदाज्ञानं नित्यज्ञानं समाप्नुयात् ।। १९ ।

पुनः श्रीकृष्णमन्त्राश्च सर्वदेवनिषेवकाः ।
यज्ज्ञात्वा देवताः सर्वा सर्वदिङ्मुखपालकाः ।। २० ।

तत्प्रयोगं महादेव शृणु सिद्धेश्च लक्षणम् ।
विना कृष्णाश्रयेणापि ब्रह्मा तुष्टो न कुत्रचित् ।। २१ ।

न तुष्टा कुण्डली देवी पशुभावं विना प्रभो ।
पशुभावे ज्ञानसिद्धिर्वीरभावे हि मोक्षभाक् ।। २२ ।

दिव्यभावे समाधिस्थो जीवन्मुक्तः स उच्यते ।
कान्तबीजं समुद्धृत्य शक्रवामस्वरान्वितम् ।। २३ ।

नादबिन्दुसमाक्रान्तं कृष्णसम्बोधनं पदम् ।
पुनः पूर्वमनुं युक्ता त्र्यक्षरात्मा महामनुः ।। २४ ।

एतन्मन्त्रजपं कृत्वा योगी भवति योगिराट् ।
योगोऽयं परमाह्लादकारकोऽनन्तरूपकः ।। २५ ।

बहुभिः किं कथनीयं यः करोति फलं लभेत् ।
ध्यायेत् श्रीगोपिकानाथं राकिणीमण्डलेश्वरम् ।। २६ ।

जगतां सत्त्वनिलयं श्रीकृष्णं गोकुलेश्वरम् ।
स्वाधिष्ठानस्थितं श्यामं यजेद्भुजचतुष्टयम् ।। २७ ।

शङ्खचक्रगदापद्म–महाशोभामनोरमम् ।
सर्वविद्यागतं काम्यं श्रीगोविन्दं सुशीतलम् ।। २८ ।

महामोहहरं नाथं वनमालाविभूषितम् ।
कोटिकन्याकराम्भोजजयितं[1] सर्वसङ्गतम् ।। २९ ।

किरीटिनं महावीरं बालेन्दुं चूडयान्वितम् ।
गुञ्जामाला शोभिताङ्गं श्रीनाथं परमेश्वरम् ।। ३० ।

---

१. जितं सर्वज्ञ–ग० ।—कोटिसंख्याकाः कन्याः, तासां करा हस्ता अम्भोजमिव, तेन जयितम् । जयः सञ्जातो यस्य तत् । इतच्प्रत्ययः ।

पीताम्बरं मन्दहास्यं षट्पद्मदलमध्यगम् ।
कामिनीप्राणनिलयं वसुदेवसुतं हरिम् ॥ ३१ ।

एवं ध्यात्त्वा षड्दले च सदा वक्षःस्थकौस्तुभम् ।
राजराजेश्वरं शौरिं भाव्यं श्रीवत्सलाञ्छनम् ॥ ३२ ।

स्वाधिष्ठानगतं ध्यायेन्मुरारिसिद्धिगो नरः ।
एवं ध्यात्त्वा पुरा ब्रह्मा नारायणगुणोदयः ॥ ३३ ।

मनःकल्पितद्रव्यैश्च पूजयेत्परमेश्वरम् ।
षड्दले च महापद्मे संध्यायेत् हरिमायजेत् ॥ ३४ ।

षोडशोपचारयुक्तैर्मानसक्षेत्रसम्भवैः ।
मनःकल्पितपीठे च स्थापयित्त्वा हरिं गुरुम् ॥ ३५ ।

योगेश्वरं कृष्णमीशं राधिकाराकिणीश्वरम् ।
एकान्तचित्ते चारोप्य कृष्णं पीठे प्रपूजयेत् ॥ ३६ ।

तत्र दलाष्टकं पद्मं तत्र षट्कोणकर्णिकम् ।
वेदद्वारोपशोभञ्च संनिर्म्माय मनोहरम् ॥ ३७ ।

पुनः पुनर्यदा[1] ध्यायेत् षड्दलेषु दलेऽष्टकम् ।
पञ्चोपचारैर्दशकैः श्रीविष्णु परिपूजयेत् ॥ ३८ ।

गन्धादयो नैवेद्यान्ता पूजापञ्चोपचारिका ।
आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ॥ ३९ ।

[2]मधुपर्काचमनस्नानवसनाभरणानि च ।
सुगन्धिसुमनो धूपदीपनैवेद्यवन्दनम् ॥ ४० ।

प्रयोजयेदर्चनायामुपचारांस्तु षोडश ।
विष्णोराराधने[3] कुर्यात् सर्वत्र विधिरेष यः ॥ ४१ ।

विधिः स्यात् कृष्णविश्वेश समुद्भूतस्य सत्पतेः ।
दशोपचारकथनं श्रूयतां वल्लभ प्रभो ॥ ४२ ।

---

१. मुदा–ग० । २. मधुपर्कश्च आचमनं च स्नानं च वसनं च आभरणं चेति इतरेतरयोगद्वन्द्वः ।
३. सर्वाज्ञया–ग० ।

पाद्यमर्घ्यं तथाचामं मधुपर्काचमनं तथा ।
गन्धादयो नैवेद्यान्ता उपचारा दशक्रमात् ।। ४३ ।

विष्णुं सम्पूज्य [1]धीमान् हविष्याशोर्जितेन्द्रियः ।
सर्वदा परमानन्दः कालिकावशसेवकः ।। ४४ ।

सर्वज्ञानधरो वीरो विवेकी सर्वदर्शकः ।
संभावयेत् स्वाधिष्ठाने निरन्तरं महाशुचिः ।। ४५ ।

बालकक्रियया व्याप्तो भावज्ञानी निरामयः ।
स भवेत् कालिकापुत्रो यः कृष्णभावतत्परः ।। ४६ ।

कृष्णं सञ्चिन्तयेन्मूलकमलोद्‍र्ध्वे कुलात्मकम् ।
स भवेत्कालिकापुत्रोऽष्टाङ्गसिद्धिगुणान्वितः ।। ४७ ।

मानसैः पूजनं कृत्वा शंखस्थापनमाचरेत् ।
यत्कृत्वा मानसं योगं न कुर्याद्बहिरर्चनम् ।। ४८ ।

मूलमन्त्रदेवतायाः साधने दैवतं यजेत् ।
देवस्य दक्षिणस्थांश्च पूर्वोपास्यसुसंस्थितान् ।। ४९ ।

पूजयेद्गन्ध[2]पुष्पाद्यैस्तुल्यमन्त्रेण मन्त्रवित् ।
ततः श्रीकृष्णपादाब्जं ध्यानं कुर्यान्मनोलयम् ।। ५० ।

एवंक्रमेण तत्पद्मे स्थिरो भवति योगिराट् ।
यः करोति शुद्धभावं महामोहहरं हरिम् ।। ५१ ।

स्थापयित्वा च षट्पद्मे महामोक्षमवाप्नुयात् ।
यः प्रधानगुणज्ञश्च स मे शास्त्रार्थमाश्रयेत् ।। ५२ ।

इहकाले शत्रुलोके निवसत्येव योगिराट् ।
पादाम्भोजे मनो दद्यान्मखकिञ्जल्कचित्रिते ।। ५३ ।

जङ्घायुगे [3]चारुरामकदलीकाण्डमण्डिते ।
उरुद्वये मत्तगजकरदण्डसमप्रभे[4] ।। ५४ ।

---

१. शुद्धः स्यात्–ग० । २. गन्धश्च पुष्पं च गन्धपुष्पे, ते आद्ये येषां तैः ।

३. चारुरामं च तत्कदलीकाण्डं च तेन मण्डिते ।

४. मत्तश्चासौ गजश्च मत्तगजस्तस्य करदण्डस्तेन समा प्रभा यस्य तस्मिन्, इति बहुव्रीहिः ।

गङ्गावर्तगभीरे तु नाभौ शुद्धविलेऽमले ।
उदरे वक्षसि तथा हरौ श्रीवत्सकौस्तुभे ॥ ५५ ।

पूर्णचन्द्रायुतपक्षे ललाटे चारुकुण्डले ।
शङ्खचक्रगदाम्भोजे दोर्दण्डपरिमण्डिते[1] ॥ ५६ ।

[2]सहस्रादित्यसंकाशे सकिरीटकुलद्वयम् ।
स्थानेष्वेषु यजेन्मन्त्री विशुद्धः शुद्धचेतसा ॥ ५७ ।

मनो निवेश्य कृष्णे वै तन्मयो भवति ध्रुवम् ।
यावन्मनोलयं याति कृष्णे स्वात्मनि चिन्मये[3] ॥ ५८ ।

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवभैरवीसंवादे श्रीकृष्णस्वाधिष्ठानप्रवेशो नाम अष्टात्रिंशत्तमः पटलः ॥**

●

---

१. दोषः बाहोः दण्डस्तेन परिमण्डिते ।
२. सहस्रमादित्यास्तैः संकाशे सदृशे ।
३. चिदेव चिन्मयं तस्मिन् ।

## अथैकोनचत्त्वारिंशः पटलः

**आनन्दभैरवी उवाच—**

अथ नाथ प्रवक्ष्येऽहं संसारसाधनोत्तमम् ।
येन साधनमात्रेण योगी भवति तत्क्षणात् ॥ १ ।
अनायासेन सिद्धिः स्याद्यद्यन्मनसि वर्त्तते ।
त्रैलोक्यं मोहयेत्क्षिप्रं त्रैलोक्यं वशमानयेत् ॥ २ ।
[1]रामेण सहितं नित्यं जगतां साक्षिणं वरम् ।
जामदग्न्यकराम्भोजसेवितं सर्वसेवितम् ॥ ३ ।
अनन्तसत्त्वनिलयं वासुकी[2] सङ्गमाकुलम् ।
[3]अष्टहस्ताग्रसुश्रीदं नानालङ्कारशोभितम् ॥ ४ ।
स्वाधिष्ठानगतं ध्यात्त्वा शीतलो जायते वशी ।
तत्स्तोत्रं शृणु मे नाथ यत्पाठात् सिद्धिमाप्नुयात् ॥ ५ ।
ब्रह्मादयः सुराधीशा मुनयः क्रतुरक्षकाः ।
एतत् स्तोत्रं पुरा कृत्वा जीवन्मुक्तो महीतले ॥ ६ ।
अतः श्रीकालिकानाथ स्तोत्रं शृणु महत्फलम् ॥ ७ ।
श्रीविष्णोरद्भुतकर्मणो ब्रह्मर्षिस्तृष्टुप्छन्दः
श्रीविष्णुः श्रीकृष्णः श्रीनारायणो देवता सर्व-
स्तोत्रसारकवचमन्त्रसिद्धचर्थे विनियोगः ॥
श्रीकृष्णं जगतामधीशमनघं[4] ध्यानात्सिद्धिप्रदं
गोविन्दं [5]भवसिन्धुपारकरणं सन्तारणं कारणम् ।
श्रीविष्णुं वनमालिनं नरहरिं नारायणं गोकुलं
योगेन्द्रं नरनाथमादिपुरुषं वृन्दावने भावयेत् ॥ ८ ।

---

१. स्वाधिष्ठानगतं विष्णुं संसारसारप्रदं हरिम् ।
यः स्तौति प्रत्यहं भक्त्या स्वाधिष्ठानाक्षरस्थिरम् ॥
वादिलानावर्णयुतं हिमांशु परिशोभितम् ॥ क० ।

२. संकुलेक्षणम्—ग० ।

३. अष्टहस्तो ग्रहम्—ग० ।

४. अविद्यमाना अघा यस्मिन्, तम् ।

५. भव एव सिन्धुः, तस्य पारकरणम् ।

मोक्षश्रीसहितं कृतान्तविकृतं[1] धर्मार्णवं सुन्दरं
श्रीरामं[2] बलरामभावविमलं नित्याकुलं सत्कुलम् ।
श्रीश्यामं [3]कनकादिहार[4]विलसत्लम्बोदरं श्रीधरं
तं वन्दे हरिमीश्वरं [5]गुणवतीमायाश्रयं स्वाश्रयम् ।। ९ ।

वैकुण्ठेशमशेषदोषरहितं सायुज्यमोक्षात्मकं
नानारत्नविनिर्मिता मम पूजा राजेन्द्रचूडामणिम् ।
शोभामण्डलमण्डितं सुरतरुच्छायाकरं योगिनं
विद्यागोपसुतावृतं[6] गुणमयं वाक्सिद्धये भावयेत् ।। १० ।

स्वाधिष्ठाननिकेतनं परजनं विद्याधनं मायिनं
श्रीनाथं कुलयोगिनं त्रिभुवनोल्लासैकबीजं प्रभुम् ।
संसारोत्सवभावलाभनिरतं[7] सर्वादिदेशं सुखं
वन्देऽहं वरसर्पशत्रुसफले[8] पृष्ठे स्थिरानन्ददम्[9] ।। ११ ।

[10]भावाढ्यं भवभावयोगजडितं जाड्यापहं[11]भास्वरं
नित्यं शुद्धगुणं [12]गभीरधिषणामोदैकहेतुं [13]पतिम् ।
कीर्त्तिक्षेमकरं महाभयहरं[14] कामाधिदैवं शिवं
तत्तत्षड्दलमध्यगेहरुचिरानन्दैकदेशास्पदम् ।। १२ ।

---

१. विकृतिम्–ग० । २. श्रीबालम्–ग० । ३. ककुरादि–ग० ।
४. विगलत्–ग० । ५. गुणवताम्–क० । ६. रतम्–क० ।
७. नाम–क० । ८. सकले–ग० । ९. नन्दनम्–ग० ।
१०. भावान्तम्–ग० । ११. भासुरम्–ग० ।
१२. गभीराया धिषणाया य आमोदः स एवैको हेतुर्यस्य तम् । १३. परम्–ग० ।
१४. भवहरम्–ग० ।

वन्दे श्रीपतिमच्युतं नरहरिं दैत्यारिशिक्ष्याकुलं[1]
गन्धर्वप्रभृतेः सुगायनरतं वंशीधरं भावदम् ।
रत्नानामधिपं गतिस्थमचलं गोवर्धनाधारणं
विश्वामित्रतपोधनादिमुनिभिः संसेवितं [2]तैजसम् ॥ १३ ।

वन्दे गोविन्दपादाम्बुजमजमजितं[3] राजितं भक्तिमार्गे
[4]सत्त्वोत्पन्नं प्रभुत्वं परगणनमितं चारुमञ्जीरहारम् ।
हंसाकारं [5]धवलगरुडानन्दपृष्ठे [6]निमग्नं
वन्धूकारक्तसारान्वितचरणतलं [7]सर्वदाशान्तरालम् ॥ १४ ।

राकिण्याः प्रेमसिद्धं नववयसिगतं [8]गीतवाद्यादिरागं
रागोत्पन्नं [9]सुफलगुणदं गोकुलानन्दचन्द्रम् ।
वाणी-लक्ष्मी-प्रियं तं त्रिभुवनसुजनाह्लादकर्त्तारमाद्यं
वन्दे सिद्धान्तसारं गतिनतिरहितं [10]सारसङ्केतिताप्तम् ॥ १५ ।

कामं कामात्मकं तं विधुगतशिरसं कृष्णसम्बोधनान्तं
बीजं कामं पुनस्तत् [11]पुरुषसुरतरुं भावयित्त्वा भजेऽहम् ।
श्रीकृष्णं कृष्णकृष्णं निरवधिसुखदं [12]सुप्रकाशं प्रसन्नं
स्वाधिष्ठानाख्यपद्मे [13]मनसि गतो भवे सिद्धिस्थलस्थम् ॥ १६ ।

---

१. मिक्ष्वाकुगम्–ग० । २. तेजसम्–ग० ।
३. मजयमजितम् –ग० । ४. मल्लोत्पन्नम्–ग० । ५. बलधर–ग० ।
६. निलग्नम्–क० । ७. ज्ञानवालम्–ग० । ८. वाणम्–ग० ।
९. सुसकल–ग० । १०. स्तम् इति–ग० ।
११. पुरुषः सुरतरुरिव कल्पवृक्ष इव । उपमितमिति समासः ।
१२. निरवधि यत्सुखं तद् ददाति इति कप्रत्ययान्तः ।
१३. मनसि गतभवेसिद्धि सिद्धस्थलस्थम्–ग० ।

आकाशे चारुपद्मे [1]रसभयवलगं रक्तवर्णं प्रकाण्डं
आत्मारामं नरेन्द्रं सकलरतिकरं कंसहन्तारमादिम् ।
आद्यन्तस्थानहीनं [2]विधिहरगमनं सेन्द्रनीलामलाभं
[3]भावोत्साहं त्रिसर्गस्थितिपरममरं भावये भावसिद्ध्यै ॥ १७ ।

सर्वेषां ज्ञानदानं रसदलकमले सर्वदा त्वं करोषि
आत्मानन्दं[4] [5]सुधादिप्रियधनगुणिनामेकयोगप्रधानम् ।
मायापूर्णः प्रचयनवरसः प्रीतिदेशः[6] प्रभेकः
[7]श्रीराजाख्यः प्रपूर्णः मयि धनरहिते दृष्टिपातं भवादौ ॥ १८ ।

काली श्री[8]कुण्डलिन्याः परगृहनिरतं[9] [10]भावकब्रह्मरूपं
मुक्तिच्छत्रं [11]पुरेशं निजधनसुखं भार्यया क्रीडयन्तम् ।
[12]सभाक्षेत्रं नेत्रं नयमानमयमत्पुरसंस्थाभिषेकम् ॥ १९ ।

ध्यात्त्वाऽहं प्रणमामि सूक्ष्मकमले[13] लोकाधिपं व्याधिपं
वैकुण्ठं कृष्णमीडे कुरुभवविभवक्षेमहन्तारमन्तम् ।
शान्तानां ज्ञानगम्यं स्वनयनकमले पालयन्तं त्रिमार्गं
वज्रारिं पूतनारिं [14]द्वयवकनरकध्वान्तसंहारसूरम् ॥ २० ।

---

१. वमममरुणसम्—क० ।
२. वहगहनम्—ग० ।
३. वर्ग—ग० ।
४. प्रेमानन्दम्—ग० ।
५. गुणधनिनाम्—क० ।
६. प्रातिदेशः प्रभेगः—ग० ।
७. श्रीवधक्षेमहीने मयि धनरहिते दृष्टिपात्रं तवादौ—ग० ।
८. श्रीकण्ठनिल्याः—ग० ।
९. परगृहनिगतम्—ग० ।
१०. तारक—ग० ।
११. पुरवशनिधनम्—ग० ।
१२. सभाक्षेत्रे त्रिनेत्रं वरमणि मयशतपूरसंज्ञात्रियेकम्—क० ।
१३. हरण ......न्सारमन्तम् ।
१४. द्वयवकनरकयोः वकासुरनरकासुरयोर्यद् ध्वान्तमज्ञानं तस्य संहारे सूरम् ।

मान्यं लोकेषु सर्वेष्वतिशयमनसं केवलं निर्मलञ्च
ओंकारं कारणाख्यं सुगतिमतिमतां मातृकामन्त्रसिद्धम् ।
सिद्धानामादिसिद्धं सुररिपुममलं कालरूपं रिपूणां
मूलोर्ध्वे षड्दलान्ते मनसि सुविमले पूरयित्वा मुकुन्दम् ॥ २१ ।

नित्यं [1]सम्भावयेऽहं निजतनुसमता सिद्धये पूजयामि
त्वं साक्षादखिलेश्वरः प्रियकरः श्रीलोकहस्तार्चितः ।
क्षोणीशः प्रलयात्मकः प्रतिगुणी ज्ञानी त्वमेको महान् ॥ २२ ।

यद्येवं मम पामरस्य कलुषं श्रीधर्महोनान्दितं
कृत्वा पादतले यदीह नियतं [2]व्यारक्ष रक्षात्मगम् ।
[3]राधाकृष्णपदामलाम्बुजतलं [4]चैतन्यमुक्त्याकुलं
सर्वत्रादिगमागमं त्रिगमनं निर्वाणमोक्षाश्रयम् ॥ २३ ।

बालं वैरिविनाशनं सुखमयं कैवल्यमोक्षास्पदं
दैवं देवगणार्चितं रसदले चारोपयामि प्रभो ।
निर्दिष्टं भुवनाश्रयं [5]यतिपतिं निर्वाणमोक्षस्थितं
निर्वाणादिकमोदने प्रचपलं श्रीचञ्चलासंकुलम् ॥ २४ ।

वन्देऽहं परमेश्वरं सकलदैत्यानां बलप्राणहं
हंसारूढनिरक्षणं क्षणगतं वाणीपतिं भूपतिम् ।
वाञ्छाकल्पलतापतिं कुलपतिं विद्यापतिं गोपतिम् ॥ २५ ।

---

१. रम्भावयेऽहं निजतनुसमसिद्धये–ग० ।
२. व्यावक्ष रक्षात्मक–ग० ।
२. पदासन–ग० ।
३. सूक्त्या–ग० ।
५. यदुपति–ग० ।

[1]श्रीविद्यापतिमादिदेवपुरुषं[2] विश्वेश्वरप्रेमगं[3]
[4]श्रीकुम्भोद्भवकालसत्त्वनिकरं [5]त्वां भास्करं भावये ।
सिद्धानाम[6]भिचिह्नयोगनिरतं रक्ष त्वमादौ हि माम् ॥ २६ ।

प्रभो निःसंकेतं गुणमणिमतं श्रेयसि मतं
[7]मतामन्तः सुस्थं विगलितमहाप्रेमसुरसम् ।
मुदा वन्दे[8] कृष्णं हरकरतलाम्भोजयजितम् ॥ २७ ।

प्रभापुञ्जं [9]रामाश्रयपदमदं कामकुशलं
महामन्त्रच्छायां रजनिमिलितं ध्वान्तजडितम् ।
त्रिकोणस्थं कुस्थं कुगतिसुगतिं कारणगतिं
[10]प्रलीनं संस्थानं जगति जगतां धर्ममुदयम् ॥ २८ ।

रमेशं वाणीशं विधिगतपदं शम्भुनिगतं
त्रिकालं योगानां नयनकमलं शब्दनिरतम् ।
कुलानन्दं गोपीजनहृदयगं[11] गोपियजितं
विधानं त्वामिन्द्रं [12]गुरुतरमुपेन्द्रं हरिरिपुम् ॥ २९ ।

मुदा त्वां वन्देऽहं [13]चपलं तां मे नवहवे
[14]कुलालापश्रद्धामयमखिलसिद्धिप्रदमनम् ।
[15]मलातीतं नीतं सुरनरसतां[16] शास्त्रभवनम् ॥ ३० ।

---

१. श्रीविद्या सम्प्रदायसिद्धा एव फलदा भवति तस्याः पतिम् ।
२. वपुषम्—ग० । ३. विश्वेश्वरस्य प्रेमाणं गच्छति । गमेर्डः ।
४. गङ्गोद्भव—ग० । ५. तम्—ग० । ६. मति—ग० ।
७. मतास्तस्थम्—ग० । ८. मुदानन्दे—ग० । ९. सारा इति—ग० ।
१०. प्राणिनां संस्थम्—ग० । ११. हृदयरागं गोपभाजेतम्—ग० । १२. सुरेन्द्रं सुररिपुम्—ग० ।
१३. त्वमपि चपलम्-ग० ।
१४. कुलाना—ग० । —कुलालस्यापश्रद्धा तन्मयम्, अथवा कुलस्यालापे या श्रद्धा, तन्मयम् ।
१५. मनातीतम्—ग० । १६. सुराश्च नराश्च सन्तश्चेति इतरेतरयोगद्वन्द्वः ।

विनोदं नारीणां हृदयरसिकं शोकरहितम् ।
विराजं यज्ञानां [1]हितमतिगुणं यामि शरणम् ॥ ३१ ।

एतत्सम्बन्धमात्री[2] [3]मम कुलशिरसि स्थायिनं[4] पातु नित्यं
गोपीनां प्राणनाथः प्रतिदिनमनिशं भालदेशं प्रपायात् ।
भालाधोदेशसंस्थं समवतु सहसा राजराजेश्वरेशः
गोपान्वन्वो सुरेशः स्थित्यन्तशास्त्रनेत्रं[5]
सुखमखिलमयः [6]कण्ठच्छत्राभिसंस्थम् ॥ ३२ ।

प्रष्ठस्थं पातु शौरिः प्रतिदिनममरो लिङ्गवाह्यं कटिस्थं
शम्भुप्रेमाभिलाषी मम तु कुलपदं गुह्यदेशं प्रपायात् ।
आनन्दोद्रेककारी सकलतनुगतं पातु नित्यं मुरारिः[7]
[8]दैत्यारिश्चोरुमूलं नरहरिवताजङ्घया पादपद्मम् ॥ ३३ ।

एतत्स्तोत्रं पठेद्विद्वान् नियतो भक्तिमान् शुचिः ।
स्थिरो भवति मासेन षड्दले सर्वसिद्धिभाक् ॥ ३४ ।

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवभैरवीसंवादे श्रीकृष्णस्तवनकवचं नामैकोनचत्वारिंशत्तमः पटलः ॥**

●

---

१. सति–ग० । २. मानी–ग० । ३. मय–ग० ।

४. स्यायिनपते (?)–ग० । ५. स्थित्यन्ते शस्त्रिनेत्रम्–ग० । —अत्र पाठस्त्रुटितः ।

६. भवः कण्ठकृत्वाभिसंस्यम्–ग० ।

७. सुरारिः–क० । —मुरारिरिति पाठे मुरस्य मुरनामकस्य दैत्यस्यारिरित्यर्थः ।

८. दैत्यानामरिः श्रीकृष्णः परमात्मा इत्यर्थः ।

## अथ चत्वारिंशः पटलः

**आनन्दभैरवी उवाच—**

अथ नाथ प्रवक्ष्यामि श्रृणुष्वावहितो मम ।
येन क्रमेण लोकानां योगकार्यं दृढं भवेत् ।। १ ।

सर्वत्र भावग्रस्तः सः सिद्धो भवति भैरव ।
यो भवेद्भैरवो देवो भुवने सर्वगो हि सः ।। २ ।

क्रियादक्षो महावीरो वीरवल्लभभावकः ।
भावयित्त्वा वर्णमालां मध्ये जप्त्वा दिवानिशम् ।। ३ ।

हविष्याशी प्राणवायुरतो वेदान्तपारगः ।
सिद्धान्तवेत्ता सर्वेषां शास्त्राणां निर्णयप्रियः ।। ४ ।

गाथाज्ञानी परानन्दो विवेकी [1]भावतत्परः ।
भाववेत्ता रहस्यार्थज्ञानी कोविदवेदवित् ।। ५ ।

वाक्यसिद्धिज्ञानपरः सत्यवादी दृढासनः ।
भावयेत् षड्गतं वर्णं ध्यानं कुर्यात् पृथक् पृथक् ।। ६ ।

षट्पद्मस्थो भावयेद्वै षड्वर्णध्यानपूर्वकम् ।
[2]वादिलान्ताक्षरं ध्यायेन्महाविद्यानिषेवकः ।। ७ ।

[3]वकारं सौन्दर्यं स्वकिरणमयं भाव्यमतुलं
मुकुन्दश्रीभक्तिप्रियमणज्ञकं[4] पूर्वदलगम् ।
विशिष्टज्ञानान्तं [5]सुखरनतं कोटिकिरणं
विभाव्य श्रीलक्ष्मीं गमयति झटित् कालपुरुषम् ।। ८ ।

---

१. सभवेत्परः—ग० ।  २. वादिनान्त—ग० ।
३. विकारम्—ग० ।  ४. मणयकम्—ग० ।
५. सुष्ठु खरः धेनुकासुरः नतो येन तम् । अथवा सुखं रान्ति ददति ये ते सुखराः, ते नताः प्रणता यस्मिन् ।

[1]द्विवर्णं श्रीनाथं सुखयति भकारं रसदले
त्रिकोणापार्श्वस्थां[2] चपलशकलं शम्भुनिलयम् ।
महारक्ताकारं तरुणविगतं [3]भीममकुलं
कुलागारस्थानं [4]कुलरमणोरक्तायुतमिति ।। ९ ।

यदा ध्यायेत् ज्ञानी निरवधि मुदा शोकविषहं
त्रिलोकानां स्थानं भुवनशरणं [5]प्रातविसुखी ।
महामोक्षद्वारे भवति स महान् सर्वजडितो
विलासी सर्वेषां नवनववधूनां प्रियपतिः ।। १० ।

महाकालस्थानं स जयति सकारं यदि [6]भजे-
दरीणां व्याहस्ता रुधिरकिरणं कोटचरुणकम् ।
महाकालस्थानं······शरणं प्रागपि सुखी
[7]त्रिकोणां दक्षाङ्के निगमनयनो योगयजितः ।। ११ ।

विनोदी सौख्यानां सुरतरुसमानो भुवि दिवि
यकारं यो ध्यायेदमरपदवीव्याधिरहितः ।
महावाणोनाथं प्रणयजडितं त्वक् सुरतरुं
मुकुन्दानन्दान्तः[8] पवनमिलितं कामकरणम् ।। १२ ।

तदा लोकोऽकामी भवति नितरां काकपवनी
महाग्नेः संस्थानं परजलधरं[9] सूर्यंशतकम् ।

---

१. द्विरण्ड–ग० ।  २. त्रिकोणं पार्श्वं स्यात् चपलशतकम्–ग० ।

३. भीमकुतम्–ग० ।  ४. रमणि वज्रायुतमिति–ग० ।

५. प्राभवि–ग० ।  ६. मकारं यदि भजेदरीणां व्याहन्ता रुधिरधिकरणं कोटचकरुणम्–ग० ।

७. त्रिकोणादंकांके निगमनोयोग–ग० ।

८. नन्दान्तम्–ग० ।—मुकुन्दानन्दान्तः इति पाठो युक्तः । तत्र आनन्दस्यान्तो यस्मिन्नसौ आनन्दान्तः । मुकुन्देन सह कर्मधारयः ।

९. जननिधनम्–ग० ।—पर उत्कृष्टो यो जलधरस्तम् ।

[1]यदानन्दैर्ध्यायेत् परमधनदं यज्ञसुधया
सुधापानज्ञानी हवनकरणं काम्यफलदम् ।
प्रियं [2]तद्वेरत्याः कमलगभुजंगेश्वरनुतं[3]
त्रिकोणा[4]पृष्ठस्थं विधिहरिहरस्य [5]प्रियमिति ॥ १३ ।

विधानं वह्नीनां कुल[6]विमलबीजं सकरुणं
असृङ् [7]मायाखण्डं खगगणमनोरञ्जनवरम् ।
यदि ध्यायेदेको विभवविविधं याति सहसा
महेन्द्रः स्थानाङ्गं कमलसुखदं कृष्णनिलयम् ॥ १४ ।

प्रियं सिद्धक्षेत्रं यदि सुखमयं भावयति यः
[8]लकारं चन्द्रस्थं विधुशतकरं बिन्दुनिलयम् ।
विशालाक्षी राधा मधुरवचनालापकलितं
[9]रमामोदे पत्रे तरणकरणं सापहरणम् ॥ १५ ।

सुवामे[10] राकिण्या नवरसमयं मोहहरणं
विभाव्य श्रीनाथं भजति स नरो ध्याननिपुणो ।
महामोक्षं प्राप्य प्रथम[11]रजसं संगमयति ॥ १६ ।

ततो ध्येया महाविद्या राकिणीशक्तिरुत्तमा ।
श्रीविष्णुसहिता नित्यं योगैर्भोगविवर्जितः[12] ॥ १७ ।

---

१. यदानन्दे–ग० । २. तं द्रावत्थाः–क० । ३. नृतम्–ग० ।
४. भ्रष्टस्थम्–ग० । ५. श्रेयमिति–ग० । ६. कमल–ग० ।
७. रवाया–ग० । ८. नकारम्–ग० । ९. मोदे तपनकरणम्–ग० ।
१०. रामे–ग० । ११. वयसि–ग० ।
१२. भोगैर्विवर्जितः, सर्वभोगरहित इत्यर्थः ।

अकलङ्की कुलानन्दो मन्दहास्यावृतो महान् ।
स योगी परमं राज्यं प्राप्नोति नात्र संशयः ॥ १८ ।

यावन्मूलाधारयोगं तावद् यमादिकं प्रभो ।
यमनियमासने काले [1]योगं पञ्चामरान्वितम् ॥ १९ ।

तावत्कुर्यान्महादेव यावत्तत् सिद्धिमाप्नुयात् ।
यदि पञ्चामरा सिद्धिस्तदा [2]मायादिसिद्धिभाक् ॥ २० ।

पञ्चासवा सिद्धिकाले प्राणादिवायुपञ्चमम् ।
धृत्वा धृत्वा पुनर्धृत्वा कुम्भयेदनिशं शनैः ॥ २१ ।

शरीरे निर्मले याते वायुनिर्मलता भवेत् ।
सर्वरूपी महावायुर्निर्मलात्मानमात्मनि ॥ २२ ।

सिद्धिं ददाति योगेश यदि स्वकार्यमाश्रयेत् ॥ २३ ।

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे आनन्दभैरवीभैरवसंवादे षड्दलवर्णप्रकाशो नाम चत्वारिंशत्तमः पटलः ॥**

---

१. जप पञ्चासवान्वितम्—ग० ।

२. यमा—क० । माया आदिर्यस्याः, तां सिद्धिं भजतीति, मायादिसिद्धिभाक् । भजधातुरत्र क्विबन्तः ।

# अथैकचत्वारिंशः पटलः

**आनन्दभैरवी उवाच**[1]—

कृतान्तसंहारविहारभोगं
रसाप्लुतश्रीकर शङ्कर प्रभो ।
तवाज्ञयाऽहं कथयामि सिद्धये
मयागमानन्दवशाद्धि तन्त्रम् ॥ १ ॥

प्रेमाभिलाषी [2]सुजनो मुनीन्द्रो
जानाति तन्त्रार्थमनन्तसाधनम् ।
महाप्रभाते चरणाब्जभक्तो
गोविन्द[3]शम्भोर्यदि भक्तिभाजनः ॥ २ ॥

षड्चक्रभेदार्थविशेषसाधनं
जानाति यो वा स जनोऽतिदुर्लभः ।
स एव संसारनिषेधसाधनं
सदा विहायाचलभक्तिमाप्नुयात् ॥ ३ ॥

**आनन्दभैरव उवाच**—

यदि वा कथिता कान्ते षड्दलप्रक्रिया शुभा ।
राकिण्या मिलनं देव्याः कुण्डलिन्याः पराक्रमम् ॥ ४ ॥

सार्द्धं श्रीविष्णुना कालरूपिणा बहुरूपिणा ।
शुद्धनिर्मलतत्त्वेन परिवारगणैः सह ॥ ५ ॥

न तद्धि कथितं सर्वं श्रीकृष्णस्य [4]पराक्रमम् ।
स्तवनं देवराकिण्या सहितं कृष्णसाधनम्[5] ॥ ६ ॥

---

१. ॐ नमो भगवत्यानन्दभैरव्युवाच–ग० । ३. सुनिन्दो–ग० ।

३. भावो–क० ।—गोविन्दो भगवान् श्रीकृष्णस्तेन सहितस्य शम्भोः । ४. प्रकाशम्–ग० ।

५. कृष्णस्य साधनं यस्मिन् तन्त्रादौ ।

मङ्गलं परमं ब्रह्मसाधनं [1]कुलवर्द्धनम् ।
कृष्णप्रकाशस्तवनं राकिणीशक्तिसंयुतम् ॥ ७ ।

कथयस्व महाकालि यदि स्नेहोऽस्ति मां प्रति ।
अत्यन्तगुह्यं कथनं सहस्र[2]नाममङ्गलम् ॥ ८ ।

अष्टोत्तरं महाविष्णो राकिण्या सहितं प्रिये ।
इदानीं राकिणीस्तोत्रं वद भामिनि कामदे ॥ ९ ।

**आनन्दभैरव्युवाच—**

योगेन्द्र परमानन्दसिन्धो चन्द्रशेखर ।
शृणुष्व श्रीराकिणीस्तोत्रं परमानन्दवर्धनम् ॥ १० ।

सर्वत्र सुखदं प्रोक्तं सिद्धानामपि साधनम् ।
एतत् स्तवनपाठेन योगी योगेन्द्रदृढो[4] भवेत् ॥ ११ ।

वैष्णवीसाधने यस्तु पञ्चाचारं करोति वा ।
सर्वेषां साधनोत्कृष्टं[5] जातिभ्रष्टोऽपि नो भवेत् ॥ १२ ।

समता शत्रुमित्रेषु कर्माकर्मसु तत्त्ववित् ।
यदि वा [6]वैष्णवे नाथ समभावः प्रजायते ॥ १३ ।

पञ्चाचारक्रमेणैव सिद्धो भवति नान्यथा ।
राधादिगोपिकाभिश्च गोपवृन्दैः समन्ततः ॥ १४ ।

पञ्चाचारं मुदा कृत्वा सर्वेषां परिपालनम् ।
चकार कमलानाथोऽतः पञ्चाचारमाश्रयेत् ॥ १५ ।

[7]पञ्चाचारक्रमेणैव चैतन्या कुण्डली भवेत् ।
कृष्णचैतन्यहेतोश्च राकिण्याश्च तथा प्रभो ॥ १६ ।

---

१. ज्ञान—ग० । २. साम—ग० । ३. सिद्धश्री—ग० ।

४. योगेन्द्रभाक्—ग० । ५. कृष्णम्—ग० ।—साधनेषु उत्कृष्टं साधनोत्कृष्टम् ।

६. वैष्णवं नाथा—ग० ।

७. पञ्चसंख्याका आचारा इति पञ्चाचाराः, तत्क्रमेणैव । पञ्चाचारशब्दस्यार्थः साम्प्रदायिकः ।

चैतन्याय षड्दलस्थदेवचैतन्यहेतुना ।
कुण्डलीवधुराकिण्याः स्तोत्रं श्रृणु कुलार्णव ॥ १७ ।

आन्दोलिता रसनिधौ कुलचञ्चला या
माया[1]मयो सकलदुःखविनाशवीरा[2] ।
[3]वीरासना स्थितिगता सुलभा मुनीनां
भव्या प्रपातु भविका कुलराकिणी माम् ॥ १८ ।

आनन्दसिन्धुजडिताखिलसारपाना[4]
बाला कुलीननमिता दलषट्कुलस्था ।
[5]कालीकलामलगुणा धनिनां धनस्था
कृष्णेश्वरी समुदयं कुरु राकिणी मे ॥ १९ ।

या राकिणी त्रिजगतामुदयाय चेष्टा
संज्ञामयी कुलवती [6]कुलवल्लभस्था ।
विश्वेश्वरी स्मरहरप्रियकर्मनिष्ठा
कृष्णप्रिया मम सुखं परिपातु देवी ॥ २० ।

षड्वर्गनाथकरपद्मनिषेविता या
राधेश्वरी प्रियकरी सुरसुन्दरी सा ।
माता कुलेशजननी जगतां मनुस्था
विद्या परा रिपुहरावत मे शरीरम् ॥ २१ ।

गोविन्दरामरमणी नवमालिनी या
[7]राज्येश्वरी स्मरहरा[8] नवकामिनी [9]वा ।
मे षड्दलाश्रितसुरं[10]परिपातु नित्यं
श्रीकुण्डली सुविमला कुलराकिणी सा ॥ २२ ।

---

१. मही–ग० । २. बीधा–ग० । ३. विलासनस्थितिगता–ग० ।
४. पारा–ग० । ५. कमलामलगुणाधनस्था–ग० । ६. कुलवली–ग० ।
७. वाक्येश्वरी–ग० ।—राज्यस्येश्वरी शासिका ।
८. हरति या सा हरा पचाद्यचि स्त्रियां टाप्, स्मरस्य कामदेवस्य हरा, स्मरहरा ।
९. या–ग० । १०. पतिपातु–ग० ।

श्रीसुन्दरी कुलपरा कुलवृन्दवन्द्या
[1]सन्ध्याविधिप्रभवतामतिकामतीर्था ।
[2]श्रीदायिनी कुलगणामलभावदात्री
नित्यं प्रपातु विषयं कुलषड्दलानाम् ।। २३ ।

चैतन्यदाननिरतां[3] त्रिगुणाभिरामां
श्यामां नितम्बधृतसुन्दररत्नघण्टाम् ।
नीलाचलस्थितकरां वरदानहस्तां
श्रीकृष्णवाम[4]कमलोपरि पूजयामि ।। २४ ।

ताम्राकिणीं त्रिरमणीं [5]समलापहन्त्रीं
[6]सर्वस्थितां गगनमातरमम्बुजस्थाम् ।
पद्मासनां श्रुतिभुजां गुरुजामनन्तां
शान्तां षडम्बुजदलोपरि पूजयामि ।। २५ ।

शान्ति कृपाकपटकोपरि नाशमुक्ति
शिवां परमवैष्णवपूजिताङ्घ्रिम् ।
[7]राधां सुधां वरमयीं जगतां गुणस्थां
धर्मार्णवां रसदले परिपूजयामि ।। २६ ।

[8]कर्त्तीकरां सकरुणां रमणीं त्रिसर्गां
ताम्राकिणीमतिदयामलार्थंचिन्ताम् ।
भ्रान्ति भ्रमागमवरां स्मृतिमादिपूज्यां
भार्यां हरेरतिसुखां परिपूजयामि ।। २७ ।

---

१. न········ग० । २. श्रीदामिनी–ग० ।

३. दाम–ग० । —चैतन्यस्य प्रकाशस्य (ज्ञानस्य) दाने निरताम् । ४. रामकमलोपरि–ग० ।

५. रमना–ग० । ६ सर्वाश्रितां त्रिजगतां जनमम्बुजस्थाम्–ग० । ७. राधासुताम्–ग० ।

८. कर्त्रीकरामिति पाठो युक्तः । कर्त्रीं मायाशक्तिमपि या करोति सम्पादयति सा । अच्प्रत्ययान्तः करशब्दः ।

या कातरं निरवधिप्रणय[1]स्ववस्था
वागीश्वरी भगवती [2]यतिकोटिनम्रा ।
ताम्राकृति[3]प्रकृति[4]चेतसि रक्तवर्णा
मायामयी सुरकलावति पातु मेऽङ्गम् ॥ २८ ।

कल्पद्रुमाशयलता फलरूपिणी या
भर्गस्थिता पुरुषकोटिमुनिस्तुवन्ती ।
सा मे कुलेश्वररसं हरिहस्तपूज्या
क्षान्तिः सदा मम धनं परिपातु राधा ॥ २९ ।

क्षेमंकरी वरकरी सुकरी हरिस्था
या सौकरी भवकरी त्रिपुरा महेशी ।
वायुस्थिता लयमयी स्थितिमार्गसङ्गा
भङ्गप्रिया सकलका परिपातु राधा ॥ ३० ।

गङ्गा निर्मलभावदाममशिरोदेशं सदा रक्षतु
श्रीराधा कुलराकिणी मम कपालोर्ध्वं महावाक्प्रिया ।
मन्त्रस्था जयदा मुदा कुमुदिनी भालं भ्रुवोरन्तरं
विद्या वाग्भवकुण्डलीफलवलावाला[5] च नेत्रत्रयम् ॥ ३१ ।

गण्डं[6] चण्डसरस्वती श्रुतिकुलं [7]कैलासशैलस्थिता
मेघाटं घटवासिनी शशीमुखी[8] सूक्ष्मातिसूक्ष्माशया[9]।
जिह्वाग्रं चिबुकं [10]रदावधिवहा कण्ठं गलं स्कन्धगं
स्कन्देशी दशनप्रभामलमति–वैकुण्ठधामेश्वरी[11] ॥ ३२ ।

---

१. प्रत्रयासुवस्था–ग० । २. नति–ग० । ३. ताम्राकिणी–ग० ।
४. तेजसि–ग० । ५. नीला–क० । ६. चण्डम्–ग० ।
७. कौल–ग० ।—कैलासशैले स्थिता । ८. शशिनश्चन्द्रस्य मुखमिव मुखं यस्याः ।
९. सूक्ष्मातिसूक्ष्म आशयो यस्याः सा ।
१०. वदानाधिमहा–ग० । ११. बोधेश्वरी–क० ।

नानावर्णविलासिनी [1]मृदुरसं शम्भोर्भवानी शिवा
पृष्ठं [2]कर्मसु पृष्ठगा गतिकरी [3]नित्योल्बणी भास्वती ।
[4]पार्श्वं मे कुलमालिनी मम कटिं लिङ्गं नितम्बाम्बरं
कामाख्या धनदायिनी सकरुणा पादद्वयं पातु सा[5] ॥ ३३ ।

मातृक्रोधनिवारिणी मम शिवं षट्पत्रशोभाकरं
पातु श्रीचरुवासिनी कुलतरुं गौरी परानन्ददा ।
चैतन्यस्थलवासिनी मम गता गोविन्द[6]मातृप्रिया
चैतन्यं सततं प्रपातु धरणी धात्री वरक्षेत्रगा ॥ ३४ ।

[7]धन्या पिङ्गललोचनाम्बुजमुखी चैतन्यकर्मप्रिया
सर्वत्र[8] प्रियमाकरोतु नियतं शक्तिः क्षमाकर्तृका ।
कीर्तिस्था मम कीर्तिचक्रनिलयं लाक्षारुणा बल्वरी
[9]नीचा चक्रनिवासिनी मम जया जीवं मुदा पातु माम् ॥ ३५ ।

एतत्स्तोत्रं पठेन्नित्यं प्राणवायुवराशुभे[10] ।
षट्चक्रभेदसमये सदा पाठ्यं सुयोगिभिः ॥ ३६ ।

कुलविन्याससमये कुलचक्रप्रवेशने[11] ।
अवश्यं प्रपठेद्विद्वान् राकिणीराधिकास्तवम् ॥ ३७ ।

त्रिसन्ध्यं चेदमाकुर्यात् पठित्वा च पुनः पुनः ।
ध्यात्वा भावपरो भूत्वा मुच्यते भवबन्धनात् ॥ ३८ ।

---

१. तदुरसम्–क० । २. कर्म सुपृष्ठा–ग० ।
३. नित्यो नृणाम्–ग० । ४. सर्वम्–ग० ।
५. पातु मा–ग० । ६. सुस–ग० । ७. मध्या–ग० ।
८. माक''''शक्तिः खण्डितपाठः । ९. नीला–ग० ।
१०. प्राणवायुवरेण आशुभे इति तृतीयातत्पुरुषः । ११. कुलचक्रस्य प्रवेशनं यस्मिन्, तत्रेत्यर्थः ।

अचलां भक्तिमाप्नोति विश्वामित्रो यथा वशी ।
पठनात् पामरो याति ब्रह्मलोकं कुलाधिप ।। ३९ ।

एतत्पठनमात्रेण शीतलो गुणवान् भवेत् ।
अप्रकाश्यमिदं स्तोत्रं सर्वान्तकविनाशनम् ।। ४० ।

समभावं समाकृत्य जीवन्मुक्तो भवेद्वशी ।
पञ्चाचाररतो भूत्वा साधयेद् यदि साधनम् ।। ४१ ।

कुण्डलीयोगकाले च कुलाचारं न वर्जयेत् ।
कुलाचारवर्जनेन महाहानिः प्रजायते ।। ४२ ।

ब्राह्मणः क्षत्रियो वापि वैश्यो वा शूद्र एव च ।
समभावं सदा कृत्वा कुलाचारं समाश्रयेत् ।। ४३ ।

कुण्डली पृथिवी देवी राकिणी स्वारिदेवता[1] ।
[2]तद्गेहगामिनी देवी राधिका[3] राज्यकामिनी ।। ४४ ।

अस्याः साधनकाले च [4]समयाचारमाश्रयेत् ।
समभावे महामोक्ष इति तन्त्रार्थनिर्णयः ।। ४५ ।

समभावार्थकथनं त्यक्त्वा योगी भवेत्कृती ।। ४६ ।

**।। इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे स्वाधिष्ठानराकिणीस्तोत्रं नामैकचत्वारिंशत्तमः पटलः ।।**

✲

---

१. मेदया-ग० । २. तद्देह-ग० । ३. पाद्य-ग० ।
४. सयये आचारः, अथवा समयस्य संकेतस्य आचारः ।

# अथ द्विचत्वारिंशः पटलः

**आनन्दभैरवी उवाच—**

कथयामि महाकाल[1] परमाद्भुतसाधनम् ।
कुण्डलीरूपिणी देवी राकिण्याः कुलवल्लभ ।। १ ।

मानसं द्रव्यमानीय चाथवा बाह्यद्रव्यकम् ।
[2]अनष्टहृष्टचित्तश्च पूजयेत् सावधानतः ।। २ ।

भक्त्या जपेन्मूलमन्त्रं मानसं सर्वमेव च ।
पूजयित्वा ततो जप्त्वा होमं कुर्यात् [3] परामृतैः ।। ३ ।

समासैः पक्वनैवेद्यैः सुगन्धिकुसुमैस्तथा ।
स्वयम्भूकुसुमैर्नित्यमर्घ्यं कृत्वा निवेदयेत् ।। ४ ।

सुमुखं पूजयेन्नित्यं मधुमांसेन शंकर ।
[4]हुत्वा हुत्वा पुनर्हुत्वा प्राणवाय्वग्निसंगमैः ।। ५ ।

भ्रामयित्वा मनो बाह्ये[5] स्थापयित्वा पुनः पुनः ।
पुनरागम्यगमनं कारयित्वा [6]सुमङ्गलम् ।। ६ ।

वाचयित्वा सुवाणीभिर्याचयित्वा सवापिकम् ।
तर्पणं चाभिषेकञ्च केवलासवमिश्रितैः ।। ७ ।

मांसैर्मुद्रादिभिर्मत्स्यैः सारद्रव्यैः सपिष्टकैः ।
वृतादिसुफलैर्वापि यद् यदायाति कौलिके ।। ८ ।

[7]अचलां भक्तिमाप्नोति विश्वामित्रो यथा वशी ।
तत्तद्द्रव्यैः साधकेन्द्रो नित्यं सन्तर्प्य संजपेत् ।। ९ ।

---

१. महाकालि—ग० । २. अनन्त—ग० । ३. सावधारया—क० ।
४. एवं श्रुत्वा—ग० । ५. राज्ये—ग० । ६. सुमेलनम्—ग० ।
७. ग० पु० नास्ति ।—चलतीति चला, चलतेः पचाद्यजन्ताट्टाप् । न चला, अचला स्थिरेत्यर्थः ।

ॐ महाकाल कृष्णेन्द्र नीलमणिनिभ राकिणी-वल्लभ कुण्डली महावीर राकिणी कैवल्य-मोक्षदात्र्यै नमः ॥ क्रां क्रौं क्रं क्रं क्लीं श्रीं रां रीं रुं रें रैं रों रौं रं रः स्वाहा ॥ परमवैष्णवो महाभैरवो महाविष्णुः कुलदेवता परजननिष्फल पुरुषोत्तम वासुदेव हृषीकेश केशव नारायण दामोदर पञ्चचूड चतुर्भुज शङ्खचक्रगदाधर राकिणी सूक्ष्मा कुलकुण्डली राधिका बाह्यदेवता श्री श्रीविद्याचैतन्यानन्द-मयी विश्वव्यापिका जगन्मोहिनी मूलात् प्रगच्छन्ती[1] षडाधारभेदिनी[2] षड्दलाकार[3]प्रका-शिनी मनोभवा मांस[4] मांसरुधिरादिशरीरपरि-वारादिकं[5] पालय पालय गोपय गोपय स्थापय स्थापय[6] शत्रून् घातय घातय ॐ ह्रौं ह्रौं स्थौं[7] ह्सौं हसकल ह्रीं सकल ह्रीं श्रीं जुहोमि नमो नमः स्वाहा ॥

एतन्मन्त्रं पठित्त्वा च तर्पणञ्च समाचरेत् ।
तर्पणान्ते चाभिषेकं सदा कुर्याच्च तान्त्रिकः[8] ॥ १० ।

मूलान्ते चाभिषिञ्चामि नमः स्वाहा पदं ततः ।
ततो हि प्रणमेद्भक्त्या अष्टाङ्गनतिभिः[9] प्रभो ॥ ११ ।

---

१. प्रगरवृत्ति–ग० ।
२. मेदिनीम्–ग० ।
३. यददनाकार–ग० ।
४. मां मां मांसरुधिरादि–ग० ।
५. परिघारादिकम्–क० ।
६. स्थापय–क० ।
७. स्थौं स्थौं हं सकल हं–क० ।
८. तान्त्रिकात्–ग० ।
९. अष्टौ अङ्गानि यासु नतिसु, ताभिरित्यर्थः ।

सहस्रनाम्ना स्तवनमष्टोत्तरसमन्वितम् ।
अर्धाङ्ग[1]राकिणीयुक्तं राकिणीकेशवस्तवम् ॥ १२ ।

शृणु तं सकलं नाथ यत्र श्रद्धा सदा तव ।
श्रवणार्थं [2]बहूक्तं तत् कृपया ते वदाम्यहम् ॥ १३ ।

एतत् श्रवणमात्रेण सर्वपापक्षयो भवेत् ।
राकिणी[3]सङ्गमं नाथ स्तवनं नाम पावनम् ॥ १४ ।

ये पठन्ति [4]श्रद्धया चाश्रद्धया वा पुनः पुनः ।
तस्य सर्वः पापराशिः क्षयं याति [5]क्षणादिह ॥ १५ ।

काले काले महावीरो भवत्येव हि योगिराट् ।
संसारोत्तारणे युक्तो महाबलपराक्रमः ॥ १६ ।

अस्य श्रीमहदानन्द[6]कुलमङ्गल[7]कालसुन्दर-कृष्णमुकुन्दनारायणराकिणीकुलकुण्डलिनीमिलन-सर्वसाधननिष्फलाय [8]परमोक्षाय नित्यसुखाय योगसिद्धयेऽष्टोत्तरसहस्रनामस्तोत्रस्य गणेश-कुलगणाधिपतिः ऋषिर्बृहती[9]च्छन्दः, श्रीमत्कृष्ण-[10]महाकालपुरुषोत्तमकुलकुण्डलिनो[11] राधाराकिणी देवता, षड्दलाधारादिप्रकाशषट्पद्मसिद्ध्यर्थे जपे विनियोगः ॥

---

१. अभाङ्गम्–ग० ।
२. यदुक्तम्–ग० ।
३. मङ्गलम्–ग० ।
४. श्रियाचार–ग० ।
५. कुत्रा—ग० ।
६. श्रीमदानन्द–ग० ।—महतामानन्दो महदानन्दः, श्रिया सहित इति मध्यमपदलोपिसमासः ।
७. काल काल—ग० ।—कालश्चासौ सुन्दरश्च । अथवा कालस्यापि कालः ।
८. परमोक्षाय—ग० ।
९. वृतीच्छन्दः इति—ग० ।
१०. महांश्चासौ कालश्च, स च पुरुषेषूत्तमः ।
११. कुलानां कुलेषु वा कुण्डलिनी ।

ॐ श्रीकृष्णो महामाया यादवो देवराकिणी ।
गोविन्दो विश्वजननी महाविष्णुर्महेश्वरी ॥ १७ ।

मुकुन्दो मालती माला विमला विमलाकृतिः ।
रमानाथो महादेवी महायोगी प्रभावती ॥ १८ ।

वैकुण्ठोदेवजननी दहनो दहनप्रिया ।
दैत्यारिर्दैत्यमथिनी मुनीशो मौनभाविता ॥ १९ ।

नारायणो [१]जयकला करुणो करुणामयी ।
हृषीकेशः [२]कौशिकी च केशवः केशिघातिनी ॥ २० ।

किशोरापि[३] कैशोरी महाकालो महाकला ।
महायज्ञो यज्ञहर्त्री दक्षेशो दक्षकन्यका ॥ २१ ।

महाबली [४]महाबाला बालको देवबालिका ।
चक्रधारी चक्रकरा [५]चक्राङ्गः चक्रमर्द्दिका ॥ २२ ।

अमरो युवती भीमो [६]भया देवो दिवि स्थिता ।
श्रीकरो [७]वेशदा वैद्यो गुणा योगी कुलस्थिता ॥ २३ ।

समयज्ञो मानसज्ञा क्रियाविज्ञः क्रियान्विता ।
अक्षरो वनमाला च कालरूपी कुलाक्षरा ॥ २४ ।
विशालाक्षो दीर्घनेत्रा जयदो जयवाहना ।
शान्तः शान्तिकरी श्यामो विमलश्यामविग्रहा ॥ २५ ।

कमलेशो महालक्ष्मी सत्यः साध्वी शिशुः प्रभा ।
विद्युताकारवदनो[८] विद्युत्पुञ्जनभोदया[९] ॥ २६ ।

---

१. ज्वलाच्छन्ना–ग० । २. कैषिकी च–क० ।
३. किशोरश्चापि–ग० । ४. महाबालो–ग० ।
५. चक्रकृच्चक्रमर्द्दिका–ग० । ६. भीकोऽमया–ग० ।
७. देवे सदा–ग० ।
८. विद्युदाकारं वदनं महातेजस्वि प्रकाशशीलं यस्याः सा ।
९. निभोदरा–ग० ।—विद्युतां पुञ्जेन निभ उदयो यस्याः सा ।

[1]राधेश्वरो राकिणी च कुलदेवः कुलामरा ।
दक्षिणो दक्षिणी श्रीदा क्रियादक्षो महालया ॥ २७ ।
[2]वशिष्टगमनो विद्या विद्येशो वाक्सरस्वती ।
अतीन्द्रियो योगमाता रणेशो रणपण्डिता ॥ २८ ।
कृतान्तको बालकृष्णा कमनीयः सुकामना ।
अनन्तोऽनन्तगुणदा वाणीनाथो विलक्षणा ॥ २९ ।
गोपालो गोपवनिता गोगोपकुलात्मजा ।
मानी[3] मौनकरोल्लासा मानवो मानवात्मजा ॥ ३० ।
[4]सर्वाच्छिन्नो मोहिनी च मायो माया शरीरजा ।
[5]अक्षुण्णो वज्रदेहस्था गरुडस्थो हि गारुडो ॥ ३१ ।
सत्यप्रिया रुक्मिणी च सत्यप्राणोऽमृतापहा[6] ।
[7]सत्यकर्मा सत्यभामा सत्यरूपी त्रिसत्यदा ॥ ३२ ।
[8]शशीशो विधुवदना कृष्णवर्णो विशालधीः ।
त्रिविक्रमो विक्रमस्था स्थितिमार्गः स्थितिप्रिया ॥ ३३ ।
श्रीमाधवो माधवी च मधुहा मधुसूदनी ।
वैकुण्ठनाथो विकला विवेकस्थो विवेकिनी ॥ ३४ ।
विवादस्थो विवादेशी कुम्भकः कुम्भकारिका ।
सुधापानः सुधारूपा [9]सुवेशो देवमोहिनी ॥ ३५ ।
प्रक्रियाधारको धन्या धन्यार्थो धन्यविग्रहा ।
धरणीशो महानन्ता [10]सानन्तो नन्दनप्रिया[11] ॥ ३६ ।

---

१. धरेश्वरो—ग० ।
२. विशिष्ट—ग० ।
३. मान—ग० ।
४. सर्ववृन्दो—ग० ।
५. रज ।
६. अमृतापहा—ग० ।
७. सत्यभ्रमो वाणसत्यो कालसत्योऽमृताऽध्यहा । क० अधि० पाठः ।
८. शीश—ग० ।—शशिन ईशः शशीशः ।
९. सुधंशो—ग० । —शोभनवेशयुत इति सुवेशः, पीताम्बरादिरूपः ।
१०. सानन्दा—ग० । —अनन्तेन सहितः, बलरामयुत इत्यर्थः, 'सानन्त' इति पाठे ।
११. नन्दनस्य आनन्ददायकस्य भगवतः श्रीकृष्णस्य प्रिया इत्यर्थः ।

[1]प्रियो विप्रियहरा विप्रपूज्यो द्विजप्रिया ।
कान्तो विधुमुखी वेद्यो विद्या वागीश्वरोऽरुणा ॥ ३७ ॥

अकामी कामरहिता कम्रो विलचरप्रिया ।
पुण्डरीको[2] विकुण्डस्था वैकुण्ठो बालभाविनी ॥ ३८ ॥

पद्मनेत्रः [3]पद्ममाला पद्महस्तोऽम्बुजानना ।
पद्मनाभिः पद्मनेत्रा पद्मस्थः पद्मवाहना ॥ ३९ ॥

वासुदेवो बृहद्गर्भा[4] महामानी महाङ्गना ।
[5]कारुण्यो बालगर्भा च आकाशस्थो विभाण्डजा ॥ ४० ॥

तेजोराशिस्तैजसी च भयाच्छन्नो भयप्रदा ।
उपेन्द्रो वर्णजालस्था स्वतन्त्रस्थो विमानगा ॥ ४१ ॥

नगेन्द्रस्थो नागिनी च नगेशो नागनन्दिनी[6] ।
सार्वभौमो महाकाली[7] नगेन्द्रः नन्दिनीसुता[8] ॥ ४२ ॥

कामदेवाश्रयो माया मित्रस्थो मित्रवासना ।
मानभङ्गकरो रावा[9] वारणारिप्रियः प्रिया ॥ ४३ ॥

रिपुहा राकिणी माता सुमित्रो मित्ररक्षिका ।
कालान्तकलहादेवा पीतवासाम्बरप्रिया[10] ॥ ४४ ॥

---

१. अप्रिये—ग० ।

२. वाहनस्थो वाहनाढ्या सिद्धेशः सिद्धिदायिनी ।
सिद्धिमात्रो विलोका च चञ्चलो विषयापहा ॥
स्मशानवासिनी नाथो यमभूमिनिवासिनी ।
यमस्थो यामलस्था च यवनो भवनाश्रया ॥
क० पु० अ० पाठः ।

३. पद्ममात्रा—ग० । ४. बृहद्भानुः—ग० ।

५. कारुण्यगर्भा करणा काशाख्यो विभार्तिजा । ६. नानान्दिनी—ग० ।

७. सार्वभौमोऽमला—ग० । ८. शुभा—ग० । ९. रारी—क० ।

१०. पीतवासस्याम्बरं पीतवासाम्बरं, तत् प्रियं यस्याः सा । करणाद्यन्तो वासशब्दः ।

पापहर्ता पापहन्त्री निष्पापः पापनाशिनी ।
[1]परानन्दप्रियो मीना मीनरूपी मलापहा ॥ ४५ ।
इन्द्रनीलमणिश्यामो महेन्द्रनीलरूपिणी ।
नीलकण्ठप्रियो दुर्गा दुर्गा दुर्गतिनाशिनी ॥ ४६ ।
त्रिकोणमन्दिरश्रीदो विमाया मन्दिरस्थिता ।
मकरन्दरसोल्लासो मकरन्दरसप्रिया ॥ ४७ ।
[2]दारुणारिनिहन्ता च दारुणारिविनाशिनी ।
कलिकालकुलाचारः [3]कलिकालफलावहा ॥ ४८ ।
कालक्षेत्रस्थितो रौद्री व्रतस्थो व्रतधारिणी ।
विशालाक्षो विशालास्या चमत्कारो करोद्यमा ॥ ४९ ।
[4]लकारस्थो लाकिनी च लाङ्गली लोलयान्विता ।
नाकस्थो नाकपदका [5]नाकाक्षो नाकरक्षका ॥ ५० ।
[6]कामगो नामसम्बन्धा सामवेदविशोधिका ।
सामवेदः सामसन्ध्या [7]सामगो मांसभक्षिणी ॥ ५१ ।
सर्वभक्षो रात्रभक्षा रेतस्थो रेतपालिनी ।
रात्रिकारी महारात्रिः कालरात्रो महानिशा ॥ ५२ ।
नानादोषहरो मात्रा मारहन्ता [8]सुरापहा ।
चन्दनाङ्गो नन्दपुत्री नन्दपालः विलोपिनी ॥ ५३ ।
मुद्राकारी महामुद्रा मुद्रितो मुद्रितारतिः ।
शाक्तो लाक्षा वेदलाक्षो लोपामुद्रा [9]नरोत्तमा ॥ ५४ ।

---

१. परमानन्दजा—ग० । २. दारुणाधि—ग० ।
३. कालि काल पुत्रार्थो च काली कालपुत्रावहा—ग० ।
४. नकारस्यो नाकिनी च लाङ्गकीशो कान्यान्विता—क० ।
५. नाकरक्षा भूरक्षका—क० । ६. नामगो—ग० ।
७. विशेषिका—ग० । ८. स्मरापहा—ग० । —स्मरं कामदेवमपहतवान्—स्मरापहा ।
९. नरोहरा—ग० । —नर उत्तमो यस्याः । अगस्त्यमहर्षेर्धर्मभार्या लोपामुद्रा (राजपुत्री) ।

[1]महाज्ञानधरोऽज्ञानी नीरा मानहरोऽमरा ।
सत्कीर्तिस्थो महाकीर्तिः कुलाख्यो [2]कुलकीर्तिता ॥ ५५ ।

आशावासी वासना सा कुलवेत्ता सुगोपिता ।
अश्वत्थवृक्षनिलयो वृक्षसारनिवासिनी ॥ ५६ ।

नित्यवृक्षो नित्यलता क्लृप्तः क्लृप्तपदस्थितः ।
कल्पवृक्षो कल्पलता सुकालः कालभक्षिका ॥ ५७ ।

सर्वालङ्कारभूषाढ्यो सर्वालङ्कारभूषिता ।
अकलङ्की निराहारा दुर्निरीक्ष्यो निरापदा ॥ ५८ ।

[3]कामकर्त्ता कामकान्ता कामरूपी महाजवा ।
जयन्तो याजयन्ती च जयाख्यो जयदायिनी ॥ ५९ ।

त्रिजीवनो जीवमाता [4]कुशलाख्यो विसुन्दरा ।
केशधारी केशिनी च कामजो कामजाड्यदा ॥ ६० ।

किंकरस्थो विकारस्था [5]मानसंज्ञो मनीषिणी ।
मिथ्याहरो महामिथ्या मिथ्यासर्गो निराकृति ॥ ६१ ।

[6]नागयज्ञोपवीतश्च नागमालाविभूषिता[7] ।
नागाख्यो नागकुलपा नायको नायिका वधूः ॥ ६२ ।

नायकक्षेमदो नारी नरो नारायणप्रिया ।
किरातवर्णो रासज्ञी तारको गुणतारिका ॥ ६३ ।

[8]शङ्कराख्योऽम्बुजाकारा कृपणः कृपणावती ।
देशगो देशसन्तोषा दर्शो दर्शनिवासिनी ॥ ६४ ।

---

१. महाज्ञानहरो वाणी बाण सानहरोऽमरा—क० । २. कीर्तिका—क० ।

३. कामकर्त्री—ग० । ४. कुशालाख्यो—ग० । ५. मनसाज्ञो—ग० ।

६. नागयज्ञोपवीती च-ग० । —नाग एव यज्ञोपवीतो यस्य सः । अथवा कर्मधारये सति मत्वर्थीय इनिप्रत्ययः ।

७. नागस्य माला, नागमाला अथवा नागानां मालासमूहस्तेन विभूषिता । आद्यसमासे मालाशब्दो माल्यार्थे बोध्यः ।

८. शङ्कराख्यो रुजाक्रूराः—ग० ।

दर्शनज्ञो दर्शनस्था दृग् दिदृक्षा सुरोऽसुराः ।
सुरपालो देवरक्षा त्रिरक्षो रक्षदेवता ॥ ६५ ।

[1]श्रीरामसेवी सुखदा सुखदो [2]व्यासवासिनी ।
वृन्दावनस्थो वृन्दा च वृन्दावन्यो [3]महत्तनू ॥ ६६ ।

ब्रह्मरूपी त्रितारी[4] च तारकाक्षो[5] हि तारिणी ।
[6]तन्त्रार्थज्ञः तन्त्रविद्या सुतन्त्रज्ञः सुतन्त्रिका ॥ ६७ ।

[7]तृप्तः सुतृप्ता लोकानां तर्पणस्थो विलासिनी ।
मयूरा मन्दिररतो मथुरा मन्दिरोऽमला ॥ ६८ ।

मन्दिरो मन्दिरा देवी निर्म्मायी मायसंहरा ।
श्रीवत्सहृदयो वत्सा वत्सलो भक्तवत्सला ॥ ६९ ।

भक्तप्रियो भक्तगम्या भक्तो भक्तिः प्रभुः प्रभा ।
जरो जरा वरो रावा हविर्हेमा क्षमः क्षितिः ॥ ७० ।

क्षोणीपो विजयोल्लासा विजयो जयरूपिणी ।
[8]जयदाता दातृजाया[9] बलिपो बलिपालिका ॥ ७१ ।

कृष्णमार्जाररूपी च कृष्णमार्जाररूपिणी ।
घोटकस्थो हयस्था च गजगो गजवाहना ॥ ७२ ।

गजेश्वरो गजाधारा गजो गर्जनतत्परा ।
गयासुरो गयादेवी [10]गजदर्पो गजार्पिता ॥ ७३ ।

---

१. श्रीवासो वारसुखदो–क० ।

२. व्यापकवासिनी–क० । —व्यासेन विविधप्रक्षेपेण वसति, तच्छीला ।

३. बृहत्तनु–ग० । —महतां तनुर्ययोस्ते महत्तनू इति । ४. वितारी–क० ।

५. तारकाख्यो–ग० । —तारकेऽक्षिणी यस्य सः ।

६. तन्त्रज्ञस्तन्द्रविद्या–ग० । —तन्त्रस्यार्थं भावं जानाति इति विग्रहः ।

७. तृप्ता सुतृप्तः–ग० । ८. जयदात्री–ग० ।—ददातीति दाता, जयस्य दाता—षष्ठीतत्पुरुषः ।

९. दातृजयो–ग० । १०. गयदर्पो गयार्पिता–ग० । —गजस्येव दर्पो यस्य सः ।

कामनाफलसिद्ध्यर्थी कामनाफलसिद्धिदा ।
धर्मदाता धर्मविद्या [1]मोक्षदो मोक्षदायिनो ।। ७४ ।

मोक्षाश्रयो मोक्षकर्त्री नन्दगोपाल ईश्वरी ।
श्रीपतिः श्रीमहाकाली [2]करिशावः वायुरूपिणी ।। ७५ ।

वाय्वाहारी वायुनिष्ठा वायुबीजयशस्विनी ।
[3]जेता जयन्ती यागस्थो यागविद्या शिवः शिवा[4] ।। ७६ ।

वासवो वासवस्थी च वासाख्यो [5]धनविग्रहा ।
आखण्डलो विखण्डा च [6]खण्डस्थो खण्डखञ्जनी ।। ७७ ।

खड्गहस्तो बाणहस्ता बाणगो बाणवाहना[7] ।
सिद्धान्तज्ञो [8]ध्वान्तहन्त्री धनस्थो धान्यवर्द्धिनी ।। ७८ ।

लोकानुरागो रागस्था स्थितः स्थापकभावना ।
स्थानभ्रष्टोऽपदस्था च शरच्चन्द्रनिभानना ।। ७९ ।

चन्द्रोदयश्चन्द्रवर्णा चारुचन्द्रो रुचिस्थिता ।
रुचिकारी रुचिप्रीता रचनो रचनासना ।। ८० ।

राजराजो राजकन्या भुवनो भुवनाश्रया ।
सर्वज्ञः सर्वतोभद्रा [9]वाचालो लयघातिनो ।। ८१ ।

---

१. धर्मदो–ग० । २. किरणो–ग० । —करिणो हस्तिनः शाव इवेति विग्रहः ।

३. जेत्रा–ग० । —जयति इति जेता, स्त्रियां तु जेत्री इति स्यात् ।

४. शिशिराचलदेशस्थः शिशिराचलरक्षिका ।
सामवेदान्ततर्कश्च सामवेदफलोदया ।।
श्यामचन्द्रो बारमुख्या वारुणो वारुणिप्रिया ।
वरुणो वरुणानन्दा वरुणाख्यो व्रतान्तरा ।। क० पु० अ० पाठः ।

५. वंशनिग्रहा–ग० । ६. खण्डस्योऽखण्डखञ्जनी–ग० ।

७. वाह–ग० । ८. घनदात्रो–ग० ।

९. वाचाला लयघातिनी–ग० ।—वातीति वाः वायुः, तं चालयति इति वाचालः, गन्धप्रसारकः । अन्यथा कुत्सितवाग्वान् इत्यर्थः ।

लिङ्गरूपधरो लिङ्गा कलिङ्गः कालकेसरी[1] ।
केवलानन्दरूपाख्यो निर्वाणमोक्षदायिनी ॥ ८२ ॥

महामेघगाढो महानन्दरूपा
[2]महामेघजालो महाघोररूपा ।
महामेघमालः सदाकारपाला
महामेघमालामलालोलकाली ॥ ८३ ॥

वियद्व्यापको व्यापिका सर्वदेहे
महाशूरवीरो महाधर्मवीरा ।
महाकालरूपी महाचण्डरूपा
विवेकी मदैकीकुलेशः कुलेशी ॥ ८४ ॥

सुमार्गी सुगीता शुचिस्वी [3]विनीता
[4]महार्को वितर्का सुतर्कोऽवितर्का ।
कृतीन्द्रो महेन्द्री भगो भाग्यचन्द्रा
चतुर्थो महार्था नगः कीर्तिचन्द्रा[5] ॥ ८५ ॥

विशिष्टो महेष्टिर्मनस्वी सुतुष्टि-
र्महाषड्दलस्थो महासुप्रकाशा ।
गलच्चन्द्रधारामृतस्निग्धदेहो
गलत्कोटिसूर्यप्रकाशाभिलाषा ॥ ८६ ॥

महाचण्डवेगो महाकुण्डवेगी
महारुण्डखण्डो महामुण्डखण्डा ।
कुलालभ्रच्चक्रसारः प्रकारा
कुलालो मलाका[6]रचक्रप्रकारी ॥ ८७ ॥

---

१. कालकेश्वरी—ग० । —कालाः केसरा इति कर्मधारयस्तत इनिर्मत्वर्थीयः ।

२. महामेघगाढमनानन्दरूपो महामना घोररूपा महामेघमाला''''ग० । ३. विनता—ग० ।

४. महर्कों—ग० । —महाँश्चासौ अर्कश्चेति महार्कः, तत्सदृश इत्यर्थः ।

५. नगाकीर्तिचन्द्रा—ग० । —कीर्तौ चन्द्रो यस्यां सा ।

६. मलाकार—ग० । —मलाकारं चक्रं तस्य प्रकार इव प्रकारः, सोऽस्यास्तीति; मत्वर्थीय इनि-प्रत्ययः । अथवा षष्ठीतत्पुरुषे सति पुंयोगे ङीष् गौरादेराकृतिगणाद्वा ङीष् ।

कुलालक्रियावान् महाघोरखण्डः
कुलालक्रमेण[1] भ्रमज्ञानखण्डा ।
प्रतिष्ठः प्रतिष्ठा प्रतीक्षः प्रतीक्षा
महाख्यो महाख्या सुकालोऽतिदीक्षा ॥ ८८ ।

महापञ्चमाचारतुष्टः [2]प्रचेष्टा
महापञ्चमा प्रेमहा कान्तचेष्टा ।
महामत्तवेशो महामङ्गलेशी
सुरेशः क्षपेशी[3]वरो दीर्घवेशा ॥ ८९ ।

चरो [4]बाह्यनिष्ठा चरश्चारुवर्णा
कुलाद्योऽकुलाद्या यतिर्यागवाद्या ।
कुलोकापहन्ता महामानहन्त्री
महाविष्णुयोगी महाविष्णुयोगा ॥ ९० ।

क्षितिक्षोभहन्ता क्षितिक्षुब्धबाधा[5]
महार्घो महार्घा धनी राज्यकार्या ।
महारात्रि[6]सान्द्रान्धकारप्रकाशो
महारात्रि[7]सान्द्रान्धकारप्रवेशा ॥ ९१ ।

महाभीमगम्भीरशब्दप्रशब्दो
महाभीमगम्भीरशब्दापशब्दा[8] ।
[9]कुला ज्ञानदात्री [10]यमो यामयात्रा
वशी सूक्ष्मवेशाश्वगो नाममात्रा[11]॥ ९२ ।

१. क्रमान्–ग० । २. प्रवेष्टो–ग० ।
३. क्षपेशा–ग० । —क्षपाया रात्रेः ईशी क्षपेशी, तस्या वरः । ४. वाक्य–ग० ।
५. सुणहन्ता महार्यी महार्या घनी चार्यं–ग० ।
६. शास्त्र–ग० । —महारात्रिसम्बन्धी यः सान्द्रोऽन्धकारस्तत्र प्रवेशो यस्याः ।
७. शास्त्र–ग० । ८. नृशब्दा–ग० । —महाभीमौ गम्भीरौ शब्दापशब्दौ यस्यां सा ।
९. गुणी–ग० । १०. मयो–ग० ।
११. खगो नागमात्रा–ग० । —मीयन्ते आभिस्ता मात्राः, नाम्नो मात्रा यस्यां सा ।

[1]हिरण्याख्यहन्ता महाशत्रुहन्त्री
विनाशप्रियो बाणनाशप्रिया च ।
[2]महाडाकिनीशो महाराकिणीशो
महाडाकिनी सा महाराकिणो सा ॥ ९३ ।

मुकुन्दो महेन्द्रो महाभद्रचन्द्रा
क्षितित्यागकर्त्ता महायोगकर्त्री ।
हितो मारहन्त्री महेशेश इन्द्रा
गतिक्षोभभावो [3]महाभावपुञ्जा ॥ ९४ ।

शशीनां समूहो विधोः कोटिशक्तिः[4]
कदम्बाश्रितो वारमुख्या सतोनाम् ।
महोल्लासदाता महाकालमाता
स्वयं सर्वपुत्रः स्वयं लोकपुत्री ॥ ९५ ।

महापापहन्ता महाभावभर्त्री[5]
हरिः कार्तिकी कार्तिको देवसेना ।
जयाप्तो विलिप्ता कुलाप्तो गणाप्ता
[6]सुवीर्य्यो सभाषा क्षितीशोऽभियाता[7] ॥ ९६ ।

भवान् भावलक्ष्मीः प्रियः प्रेमसूक्ष्मा
जनेशो धनेशी कृपो मानभङ्गा ।
कठोरोत्कटानां महाबुद्धिदाता
कृतिस्था गुणज्ञो गुणानन्दविज्ञा ॥ ९७ ।

---

१. हिरणाख्य–क० । —हिरण्य इत्याख्या यस्य स हिरण्याख्यस्तस्य हन्ता ।

२. महाकाडि–ग० । —महाडाकिन्या ईशो महाडाकिनीशः ।

३. पहोभावप्रज्ञा–ग० । ४. राख्यः–ग० ।

५. हार्थो–ग० । —महान्तो ये भावास्तेषां भर्त्री भरणशीला ।

६. सुधीर्व्या–ग० । —शोभनं वीर्यं पराक्रमो यस्य सः ।

७. क्षितिशोऽतिया–ग० । —क्षितेरीशः, सोऽभियाताऽभिगन्ता ।

[1]महाकालपूज्यो महाकालपूज्या[2]
खगाख्यो नगाख्या खरः खड्गहस्ता ।
[3]अथर्वोऽथवान्दोलितस्थः महार्था
[4]खगक्षोभनाशा हविः कूटहाला ॥ ९८ ।

महापद्ममालाधृतो गाणपत्या
गणस्थो गभीरा [5]गुरुः ज्ञानगम्या ।
घटप्राणदाता घनाकाररूपा
भयार्थोङबीजाङवारीङकर्ता[6] ॥ ९९ ।

भवो भावमाता नरो यामध्याता
चलान्तोऽचलाख्या चयोऽञ्जालिका च ।
छलज्ञश्छलाढ्या[7] छकारश्छकारा
जयो जीवनस्था जलेशो [8]जलेशा ॥ १०० ।

जपञ्जापकारी[9] जगज्जीवनीशा
[10]जगत्प्राणानाथो जगद्ध्लादकारी ।
झरो झर्झरीशा[11] झनत्कारशब्दो[12]
झनञ्झञ्झनानादझङ्कारराव ॥ १०१ ।

---

१. काल–ग० । —महाकालेन पूज्यः, अथवा महाकालः पूज्यो यस्य ।

२. कान्त–ग० । —महाकालेन पूज्या, महाकालः पूज्यो यस्याः सा ।

३. खगोग्रखर्वा–ग० ।

४. मग–ग० । —खगस्य गरुडस्य क्षोभस्तं नाशयति या सा । कर्मणि अण्प्रत्ययः । अजादित्वाट्टाप् ।

५. पुरु–ग० । ६. कर्णा–ग० । ७. छलज्ञो छलाज्ञा–क० ।

८. जनेशो जनेशा–क० । —जलस्येशा जलेशा, क्षीरसागरे ईशित्वं भजते ।

९. जगज्जापकारी–क० । —जगतो जापः, तं करोति या सा, अथवा तं करोति तच्छीला, कर्तरि णिनिप्रत्ययः ।

१०. दुप्राणनाथो–क० ।

११. झर्झरीगा–ग० । —झर्झरीं गच्छति या सा गमेडः । अथवा झर्झर्या ईशा ।

१२. नन्द्रा–क० ।

ञ-चैतन्यकारी ञ-कैवल्यनारी
हृनोल्लासधारी [1]टनत्टंकहस्ता ।
[2]ठरेशोपविष्टष्ठकारादिकोटी[3]
डरो डाकिनीशो [4]डरेशो डमारा ॥ १०२ ।

ढमेशो हि ढक्का वरस्थानबीजो
णवर्णा तमालतनु:[5] स्थाननिष्ठा ।
थकारार्णमानस्थनिस्थोऽसंख्या
[6]दयावान् दयार्द्रा धनेशो धनाढ्या ॥ १०३ ।

नवीनो नगेभागतीर्णाङ्गहारो
नगेशी परः [7]पारणी सादिपाला ।
[8]फलात्मा फला फाल्गुनी फेणनाशः
फलाभूषणाढ्या वशी [9]वासरम्या ॥ १०४ ।

भगात्मा [10]भवस्त्री महाबीजमानो
महाबीजमालामुकुन्दः सुसूक्ष्मा ।
यतिस्था यशस्था रतानन्दकर्त्ता
रतिर्लाकिनीशो [11]लयार्थप्रचण्डा ॥ १०५ ।

---

१. टमत्–ग० । २. ठकेशो–क० । ३. कूट–क० ।
४. डामरा डाकिनी षोडसारा–ग० ।
५. तमालस्तनस्थान–ग० । —तमालस्येव तनुर्यस्य स इति ।
६. मालः स्वान्ति स्थान संस्था दयावान् दाया–ग० ।
७. पारसी–ग० ।
८. फलाम्राफलदोऽङ्गुली–क० । —फलानि आत्मा यस्य सः ।
९. व्यासवस्या–क० । —वासेन रम्या, वासो रम्यो यस्याः ।
१०. भवश्रीमहाबीजमाता–क० । —भवस्य शिवस्य स्त्री । महाबीजस्य माता इत्यर्थो द्वितीये पाठे ।
११. नयार्थ–ग० ।

[1]प्रवालाङ्गधारी प्रवालाङ्गमाला
हलोहालहेलापदः पादताला[2] ।
वशीन्द्रप्रकाशो वरस्थानवासा
शिवः [3]श्रीधराङ्गः शलाकाशिला च ॥ १०६ ।

षडाधारवासी[4] षडाधारविद्या
षडाम्भोजसंस्थः षडब्जोपविष्टा ।
सदा साधरोग्रोपविष्टाऽपरागी
सुसूक्तापयस्था पलाश्रयस्थिता ॥ १०७ ।

हरस्थोग्रकर्मा हरानन्दधारा [5]लघुस्थो
लिपिस्था क्षयीक्षुब्धक[6] संख्या ।
अनन्तो[7] निवर्णाहराकारबीजा
उरःस्थोऽप्युरुस्था उरा ऊर्द्ध्वरूपा[8] ॥ १०८ ।

ऋचस्थो हि ऋगालसो[9] दीर्घलृस्था
त्वमेको हि चैंबीजगुर्वी गुणस्था ।
सदौङ्कारवर्णाह्सौं[10]कारबीजा
[11]असंकारचन्द्रो ह्युसःकारवीरा ॥ १०९ ।

---

१. प्रवालाब्धि–ग० ।

२. पत्रपाल–ग० । —पादे तालो यस्याः सा । अथवा पादो गमनशीलः तालो ध्वनिर्यस्याः सा ।

३. शिश्रीधराड़ा–ग० । —श्रीधरस्याङ्गमिवाङ्गं यस्य सः ।

४. राशी–ग० । —षडाधारे वसति तच्छीलः ।

५. लयस्यो–ग० ।

६. कु क संख्या–ग० ।

७. अनर्णो निरर्णा इरा नाथ ईशा–क० । —नास्ति अन्तो यस्य सः ।

८. ऊद्ध्वंपाशा–ग० । —ऊर्ध्वं रूपं यस्याः सा, सत्त्वरूपा इत्यर्थः ।

९. गोदीर्घ–ग० । —ऋक्षु अलसः, ऋगालसः ।

१०. लौं–ग० ।

११. असंकार–ग० । —असङ्कारश्चन्द्रो यस्य स इत्यर्थः ।

हरीन्द्रो हरीशा हरिः कृष्णरूपा
शिवो वेदभाषा च शौरिः प्रसंगा[1] ।
गणाध्यक्षरूपी [2]परानन्दभक्षा
परेशो गणेशी रसो वासपूज्या ।। ११० ।

चकोरिकुलप्राण[3]बुद्धिस्थितिस्था
स्वयं [4]कामधेनुस्वरूपी विरूपा ।
श्रीहिरण्यप्रभः श्रीहिरण्यप्रभाङ्गी
प्रभातार्कवर्णोऽरुणाकारणाङ्गी[5] ।। १११ ।

विभाकोटिधारा धराधारकोषा
रणीशो [6]प्रत्यादिकूटोधरो...धारणाशौरिरार्या ।
महायज्ञसंस्थो महायज्ञनिष्ठा
सदाकर्मसङ्गः सदामङ्गरङ्गा ।। ११२ ।

किरातीपती राकिणी [7]कालपुत्री
[9]शिलाकोटनिर्माणदोहा विशाला[8] ।
कलार्ककलस्थो[10] कलाकिंकिणीस्था
किशोरः किशोरी कुरुक्षेत्रकन्या ।। ११३ ।

---

१. प्रसन्ना–ख० । —प्रकृष्टः सङ्गो यस्याः सा ।

२. परानन्दहार्या–ख० । —परानन्दो भक्षो यस्याः सा ।

३. म्लय–ग० । चकोरी गणस्थः स्वबुद्धि–ख० ।

४. कामरूपः–क० । —कामधेनुस्वरूपी—कामधेनोः स्वरूपमस्ति यस्य सः। षष्ठीतत्पुरुषे सति इनिः ।

५. कारकाङ्गी–ख० ।

६. धरासौधसंस्था धरा धारणेशः क्षमासौख्यसद्मा–ख० ।
प्रभाषादि कूटोधरो..........धारगा गौ विरार्या–ग० ।

७. कोल–ख०, ग० ।

८. देहे–ग० ।

९. शिलाकोट इत्यारभ्य किङ्किणीस्थेत्यन्तं ख० पु० नास्ति ।

१०. कंकन–ग० ।

महालाङ्गलिश्री [1]बलोद्धामकृष्णः
कुलालादिविद्याऽभयो भावशून्या[2] ।
महालाकिनी काकिनी शाकिनीशो
महासुप्रकाशा परो हाकिनीशा ॥ ११४ ।

कुरुक्षेत्रवासी कुरुप्रेममूर्ति-[3]
र्महाभूतिभोगी महायोगिनी च ।
कुलाङ्गारकारो कुलाङ्गीशकन्या
तृतीयस्तृतीयाऽद्वितीयोऽद्वितीया ॥ ११५ ।

महाकन्दवासी महानन्दकाशी[4]
पुरग्रामवासी महापीठदेशा ।
जगन्नाथवक्षःस्थलस्थो वरेण्या
[5]च्युतानन्दकर्त्ता रसानन्दकर्त्री ॥ ११६ ।

जगद्दीपकालो[6] जगद्दीपकाली
महाकामरूपी महाकामपीठा ।
महाकामपीठस्थिरो [7]भूतशुद्धि-
र्महाभूतशुद्धिः महाभूतसिद्धिः ॥ ११७ ।

---

१. राम–ख० । बनोद्धाम–ग० । —बलस्योद्धाम यस्मिन् स बलोद्धामा, स चासौ कृष्णश्च ।

२. मानोभावपूर्णा–ख० ग० ।

३. हर्त्री ख०, भर्ता–ग० ।—कुरुषु यः प्रेमा, तस्मिन् मूर्तिर्यस्य सः ।

४. वासी–ग० । —महानन्दं काशयति या, सा । वासा–ख० ।

५. शिवानन्दकर्त्ता शिवानन्दकर्त्री–ख० । वृलनन्द कती–ग० ।

६. काशो जगद्दीनी सा –ख०, ग० । जगद् दीपयति असौ जगद्दीपः, तेन कालः ।

७. भूति–क० ।

प्रभान्तः प्रवीणा गुरुस्थो
गिरिस्था गलद्धारधारी महाभक्तवेषा ।
[1]क्षणक्षुन्निवृत्तिर्निवृत्तान्तरात्मा
[2]सदन्तर्गतस्था लयस्थानगामी ॥ ११८ ।

लयानन्दकाम्या[3] विसर्गासवर्गो
विशालाक्षमार्गा[4] कुलार्णः कुलार्णा ।
[5]मनस्था मनःश्रीः भयानन्ददाता सदा
लाणगीता [6]गजज्ञानदाता महामेरुपाया[7] ॥ ११९ ।

तरोर्मूलवासी [8]तरङ्गोपदर्शा सुरेशः
समेशः[9] सुरेशा सुखी खड्गनिष्ठा[10] ।
भयत्राणकर्त्ता भयज्ञानहन्त्री[11]
जनानां मखस्थो मखानन्दभङ्गा ॥ १२० ।

महासत्पथस्थो महासत्पथज्ञा
महाबिन्दुमानो महाबिन्दुमाना ।
खगेन्द्रोपविष्टो विसर्गान्तरस्था
विसर्गप्रविष्टो महाबिन्दुनादा ॥ १२१ ।

---

१. क्षणः सुण्णवृत्तिः–क० । —क्षणेन क्षुन्निवृत्तिः क्षुधाशान्तिर्यस्याः ।

२. सदान्तंगतस्था–क० । —सतां सज्जनानामन्तर्गतस्था ।

३. काम्यो–ख^ । —लयेनानन्दो लयानन्दः, सः काम्यो यस्य ।

४. सर्गा ख०, सर्गो–ग० ।—विशालोऽक्षो यस्य, तादृशो मार्गो यस्याः ।

५. नवस्थानलक्ष्मीः–ग० । —मनसि तिष्ठति या सा मनस्था । वा विसर्गलोपः ।

६. सद इति ख०, सज–ग० ।

७. गाथा–ग० ।

८. तरुस्थापदेशा तरुण्यापदेश–ग० ।

९. सुरेशः–ग० ।

१०. नीशा–ख०, नीसा–ग० । —खड्गे निष्ठा यस्याः सा ।

११. कर्त्री भयज्ञानदानी–ग० ।—भयं च ज्ञानं च, तयोर्हन्त्री । ज्ञानमत्र प्रत्यासत्त्या भयजन्यमेव ।

सुधानन्दभक्तो[1] [2]विधानन्दमुक्तिः
[3]शिवानन्दसुस्थो विनानन्दधात्री ।
[4]महावाहनाह्लादकारी सुवाहा
[5]सुरानन्दकारा गिरानन्दकारी ।। १२२ ।

[6]हयानन्दकान्तिः मतङ्गस्थदेवो
मतङ्गाधिदेवी महामत्तरूपः ।
तदेको महाचक्रपाणिः प्रचण्डा
[7]खिलापस्थलस्थोऽविहन्मीशपत्नी[8] ।। १२३ ।

शिखानन्दकर्त्ता शिखासारवासो[9] सुशाकम्भरी
[10]क्रोष्टरी वेदवेदीसुगन्धा ।
युगो योगकन्या दवो दीर्घकन्या शरण्यः शरण्या
मुनिज्ञानगम्या[11] सुधन्यः सुधन्या ।। १२४ ।

शशी वेदजन्या[12] यमी यामवामा
ह्यकामो ह्यकामा सदा ग्रामकामा ।
धृतीशः[13] धृतीशा सदा हाटकस्थाऽ-
[14]यनेशोऽयनेशी भकारो[15]भगीरा ।। १२५ ।

---

१. विधा–ग० । २. संस्थः संस्था–ग० । ३. शिवा–ग० ।
४. महावाहना–ग० । —महान्ति वाहनानि तैः आह्लादं करोति या सा । ५. सुवाहा–ग० ।
६. हृदानना–ख० । —हयेन (वाहनेन) गमनेनानन्दः, तेन कान्तिर्यस्याः ।
७. खलाप–क० । —कलापस्थले तिष्ठति यः सः । ८. हरि हन्त्री सपत्नी–क० ।
९. देशवासा काशवासी–ग० । —शिखासारे वसति योऽसौ, णिनिप्रत्ययः कर्तरि ।
१०. सुशाकम्मरी सुसाकम्मरी–ग० ।
११. मुनिज्ञानमान्या मुनिज्ञानमान्या–ग० । —मुनिज्ञानेन गम्या ज्ञेया ।
१२. शयी कान्तवासा सकामः सकामा । यसी यास कसा ओत्रासा ग्रामकामा–ग० ।
१३. प्रघीणा–ग० । १४. घनेशो–ख० । —घनानामीशो घनेशः कुबेरः ।
१५. इति तीग्मा–ख० । —भं करोति योऽसौ भकारः ।

चलत्खञ्जनस्थः खलत्खेलनस्था[१]
विवाती[२] किराती खिलाङ्गोऽखिलाङ्गी ।
बृहत्खेचरस्थो बृहत्खेचरी च
महानागराजो महानागमाला ॥ १२६ ।

हकारार्द्धसञ्ज्ञा वृतो हारमाला
महाकालनेमि[३]प्रहा पार्वती च ।
[४]तमिस्रा तमिस्रावृतो दुःखहत्या
विपन्नो विपन्ना गुणानन्दकन्या ॥ १२७ ।

सदा दुःखहन्ता [५]महादुःखहन्त्री
प्रभातार्कवर्णः प्रभातारुणश्रीः ।
महापर्वतप्रेमभावोपपन्नो[६]
महादेवपत्नीशभावोपपन्ना ॥ १२८ ।

महामोक्षनीलप्रियाभक्तिदाता ।
नयानन्दभक्तिप्रदा देवमाता[७] ॥ १२९ ।

इत्येतत्कथितं नाथ महास्तोत्रं मनोरमम् ।
सहस्रनामयोगाऽङ्ग[८]मष्टोत्तरसमन्वितम् ॥ १३० ।

यः पठेत् प्रातरुत्थाय शुचिर्वाशुचिमानसः ।
भक्त्या शान्तिमवाप्नोति अनायासेन योगिराट् ॥ १३१ ।

प्रत्यहं ध्यानमाकृत्य त्रिसन्ध्यं यः पठेत् शुचिः ।
षण्मासात् परमो योगी सत्यं सत्यं सुरेश्वर ॥ १३२ ।

---

१. चलत रवाजनस्था—ख० ।

२. किरातः किराती शिताङ्गः शिताङ्गी—ख० । ३. महा—ख० ।

४. विपद्भङ्गकारी विपन्नाशिनी च सुखानन्ददाता महादुःखहन्त्री—ख० । ५. सदा—ख० ।

६. भारो—ग० ।—महापर्वतप्रेमभावेनोपपन्न इति कर्मधारयगर्भ-षष्ठीतत्पुरुषगर्भस्तृतीयातत्पुरुषः ।

७. सर्वदाता—क० । ८. योगाङ्गः—ग० ।

अकालमृत्युहरणं सर्वव्याधिविनाशनम् ।
अपमृत्य्वादिहरणं वारमेकं पठेद्यदि ॥ १३३ ।

पठित्वा ये [१]न गच्छन्ति विपत्काले महानिशि ।
अनायासेन ते यान्ति महाघोरे भयार्णवे ॥ १३४ ।

अकाले यः पठेन्नित्यं सुकालस्तत्क्षणाद्भवेत् ।
राजस्वहरणे चैव सुवृत्तिहरणादिके ॥ १३५ ।

मासैकपठनादेव राजस्वं स [२]लभेद् ध्रुवम् ।
विचरन्ति महावीराः स्वर्गे मर्त्ये रसातले ॥ १३६ ।

गणेशतुल्यवलिनो [३]महाक्रोधशरीरिणः ।
एतत्स्तोत्रप्रसादेन जीवन्मुक्तो[४] महीतले ॥ १३७ ।

महानामस्तोत्रसारं धर्माधर्मनिरूपणम्[५] ।
अकस्मात् सिद्धिदं काम्यं काम्यं परमसिद्धिदम्[६] ॥ १३८ ।

महाकुलकुण्डलिन्याः भवान्याः साधने शुभे ।
अभेद्यभेदने चैव महापातकनाशने ॥ १३९ ।

महाघोरतरे काले[७] पठित्वा सिद्धिमाप्नुयात् ।
षट्चक्रस्तम्भनं[८] नाथ प्रत्यहं यः करोति हि ॥ १४० ।

मनोगतिस्तस्य हस्ते स शिवो न तु मानुषः ।
योगाभ्यासं यः करोति न स्तवः[९] पठ्यते यदि ॥ १४१ ।

---

१. प्रयच्छन्ति–ग० । २. भवेत्–ग० ।

३. महाक्रोधा–ख० । —महाक्रोध एव शरीरम्, तदस्ति येषां ते ।

४. जीवन्मुक्ताः–ख० । ५. धर्माधर्मयोर्निरूपणम् । षष्ठीतत्पुरुषः, करणल्युडन्तः निरूपणशब्दः ।

६. परमां सिद्धिं ददाति । कप्रत्ययान्तः । ७. तरा–ग० ।

८. भुवनम्–क० । —षट्संख्याकानि चक्राणि तेषां स्तम्भनम्, षष्ठीतत्पुरुषः ।

९. स्तवं पठते–क० ।

योगभ्रष्टो भवेत् क्षिप्रं कुलाचारविलङ्घनात् ।
कुलीनाय प्रदातव्यं [1]न खल्वकुलेश्वरम् ॥ १४२ ।

कुलाचारं समाकृत्य ब्राह्मणाः क्षत्रियादयः ।
योगिनः प्रभवन्त्येव स्तोत्रपाठात् सदामराः[2] ॥ १४३ ।

**आनन्दभैरव उवाच—**

वद कान्ते रहस्यं मे मया सर्वञ्च विस्मृतम् ।
महाविषं कालकूटं पीत्त्वा देवादिरक्षणात् ॥ १४४ ।

कण्ठस्थाः देवताः सर्वा भस्मीभूताः [3]सुसम्भृताः ।
महाविषज्वालया च मम देहस्थदेवताः ॥ १४५ ।

[4]कैवल्यनिरताः सर्वे प्रार्थयन्ति निरन्तरम् ।
षट्चक्रं[5] कथयित्वा तु सन्तोषं मे कुरु प्रभो ।
षट्चक्रभेदकथनममृतश्रवणादिकम् ॥ १४६ ।

कथित्वा मम सन्तोषं कुरु कल्याणि वल्लभे ।
अमृतानन्दजलधौ[6] सुधाभिः सिक्त[7]विग्रहम् ॥ १४७ ।

कृत्वा कथय शीघ्रं मे चायुषं[8] परिवर्धय ।

**आनन्दभैरवी उवाच—**

निगूढार्थं महाकाल कालेश जगदीश्वर ॥ १४८ ।

भैरवानन्दनिलय कालकूटनिषेवण[9] ।
इदानीं शृणु योगार्थं मयि संयोग[10] एव च ॥ १४९ ।

---

१. स्तव एष–ख० । २. सदा नरः–क० । —सन्तश्च तेऽमराश्चेति कर्मधारयः ।

३. समरस्मृताः–क० । —समरे स्मृताः, अथवा सुष्ठु सम्भृताः पोषिताः ।

४. वैकुण्ठनिरताः–क० । ५. षट्चक्रवासी सुसूक्ष्मापथस्थापना–ग० पु० अधि० पाठः ।

६. अमृतानन्दमुदधौ–ग० ।

७. सुधाभिषिक्तं–ग० । —सिक्तो विग्रहो देहो यस्य तम् । ८. चायुषमिति–ग० ।

९. कालकूटं निषेवते इति बाहुलकात् कर्तरि ल्युट्प्रत्ययः । सम्बोधने इदं रूपम् ।

१०. संयोगमिति–ख० ।

श्रुत्वा चैतत्क्रियाकार्यं नरो योगीश्वरो भवेत् ।
ममोद्भवः खेऽमले[1] च सर्वाकारविवर्जिते ॥ १५० ।

भ्रूमध्ये सर्वदेहे च स्थापयित्वा च [2]मां नरः ।
भाव्यते चापरिच्छिन्नं ब्रह्मविष्णुशिवात्मकम् ॥ १५१ ।

मम रूपं महाकाल सत्त्वरजस्तमः[3]प्रियम् ।
केवलं [4]रजोयोगेन शरीरं नापि तिष्ठति ॥ १५२ ।

तथा केवलयोगेन [5]तमसा नापि तिष्ठति ।
तथा केवलसत्त्वेन कुतो देही प्रतिष्ठति ।
अतस्त्रिगुणयोगेन धारयामि नवाङ्गकम् ॥ १५३ ।

शनैः शनैः विजेतव्याः सत्त्वरजस्तमोगुणाः ।
आदौ जित्वा रजोधर्मं[6] पश्चात्तामसमेव च ॥ १५४ ।

सर्वशेषे सत्त्वगुणं नरो योगीश्वरो भवेत् ।
गुणवान् ज्ञानवान् वाग्मी [7]सुश्रीर्धर्मी[8]जितेन्द्रियः ॥ १५५ ।

शुद्धनिर्मलसत्त्वं तु गुणमाश्रित्य मोक्षभाक् ।
सदा सत्त्वगुणच्छन्नं[9] पुरुषं काल एव च ॥ १५६ ।

पश्यतीह न कदाचिज्जरामृत्युविवर्जितम् ।
तं जनं परमं शान्तं निर्मलं द्वैतवर्जितम् ॥ १५७ ।

---

१. स्वचित्ते च–ख० ।—खे गगने इत्यर्थः । अस्यैव विशेषणद्वयम् । अमले इति, सर्वाकारविवर्जिते इति च । २. मानवः–क० ।

३. तमोवृतमिति–ख० ।—सत्त्वरजस्तमोभिः वृतम् । अथवा सत्त्वरजस्तमांसि प्रियाणि यस्य तम् ।

४. राजयोगेन–क० । ५. तमसमिति–क० ।

६. धर्म्यमिति–ग० । —रजो धर्मो यस्य तम् । ७. सुखी–ग० ।

८. धर्म–ग० ।—शोभना श्रीर्धर्मो यस्येति फलितार्थः । विग्रहस्तु—सुश्रीश्चासौ धर्मश्चेति कर्मधारयः । पुनः मत्वर्थीय इनिः ।

९. गुणावृतमिति–ग० ।

सर्वंत्यागिनमात्मानं कालः सर्वत्र रक्षति ।
जले वा पर्वते वापि महारण्ये रणस्थले ॥ १५८ ।

[1]भूगर्त्तनिलये भीते संहारे दुष्टविग्रहे ।
सन्तिष्ठति महायोगी सत्यं सत्यं कुलेश्वर ॥ १५९ ।

महायोगं शृणु प्राणवल्लभ श्रीनिकेतन ।
योगार्थं परमं ब्रह्मयोगार्थं परन्तपः ॥ १६० ।

ये जानन्ति महायोगं म्रियन्ते न च ते नराः ।
कृत्वा कृत्वा षड्दलस्य साधनं [2]कृत्स्नसाधनम् ॥ १६१ ।

ततः [3]कुर्यान्मूलपद्मे कुण्डलीपरिचालनम् ।
मुहुर्मुहुश्चालनेन नरो योगीश्वरो भवेत् ॥ १६२ ।

एकान्तनिर्मले देशे दुर्भिक्षादिविवर्जिते ।
वर्षमेकासने योगी योगमार्गपरो भवेत् ॥ १६३ ।

पद्मासनं सदा कुर्याद् [4]बद्धपद्मासनं तथा ।
महापद्मासनं कृत्वा तथा [5]चासनमञ्जनम् ॥ १६४ ।

[6]तत्पश्चात् स्वस्तिकाख्यञ्च बद्धस्वस्तिकमेव च ।
[7]योगाभ्यासे सदा कुर्यात् मन्त्रसिद्ध्यादिकर्मणि ॥ १६५ ।

---

१. भूर्गता–क० । —भुवो गर्तं, तेन निलये 'भूगर्तनिलये' इति पाठेऽयं विग्रहः ।

२. कृष्ण–ग० ।

३. मलपद्म मूलपद्म–ख० ।

४. बद्धैकमासनमिति–ग० । —बद्धमेकमासनम् ।

५. चालनभञ्जनमिति–ग० ।

६. तत्पश्यतीति–क० ।

७. महास्वस्तिकमाकृत्य त्रिगुणं वशमानयेत् । —योगासनविधेर्निरूपणमेतत् ।
तत्रासनं बद्धभद्रासनं कुर्यात् क्रमेण तु ॥
महाभद्रासनं कृत्वा कार्मुकासनमाश्रयेत् ।
बद्धकार्मुकमेवं हि महाकार्मुकमेव च ॥ इति क० पु० अधिकः ।

चक्रासनं सदा योगी योगसाधन[1]कर्मणि ।
बद्धचक्रासनं नाम महाचक्रासनं[2] तथा ।। १६६ ।

कृत्वा पुनः प्रकर्तव्यं बद्धयोगेश्वरासनम् ।
योगेश्वरासनं कृत्वा महायोगेश्वरासनम् ।। १६७ ।

वीरासनं ततः कुर्यात् महावीरासनं तथा ।
बद्धवीरासनं कृत्वा नरो योगेश्वरो भवेत् ।। १६८ ।

ततः कुर्यान्महाकाल बद्धकुक्कुटमासनम् ।
महाकुक्कुटमाकृत्य केवलं कुक्कुटासनम् ।। १६९ ।

मयूरासनमेवं हि [3]महामयूरमेव च ।
बद्धमयूरमाकृत्य नरो योगेश्वरो भवेत् ।। १७० ।

एतत् सर्वं प्रवक्तव्यं विचार्यं सुमनःप्रिय ।
अभिषेकप्रकरणे आसनादिप्रकाशकम् ।। १७१ ।

कथितव्यं विशेषेण इदानीं शृणु षट्क्रमम् ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।। १७२ ।

ततः [4]परशिवो देवः षट्शिवाः षट्प्रकाशकाः ।
एतेषां षड्गुणानन्दाः शक्तयः[5] परदेवताः ।। १७३ ।

षट्चक्रभेदनरता महाविद्याधिदेवताः ।
[6]एतेषां स्तवनं कुर्यात् परदेवसमन्वितम् ।। १७४ ।

एतत्प्रकारकरणे [7]यश्च प्रत्यहमादरात् ।
क्रियानिविष्टः सर्वत्र भावनाग्रहरूपधृक् ।। १७५ ।

---

१. त्रिशूलमिति–ख० । —त्रयाणां शूलानां समाहारस्त्रिशूलम् ।

२. भद्रासनमिति–ख० । —भद्रमासनमिति परिभाषिकोऽर्थो ज्ञेयः । ३. मायारम्भेण–ग० ।

४. परशिवो शम्भो–ग० । —परशिवः शम्भो इत्युचितः पाठः ।

५. षड्गुणानन्दशक्तयः–ग० । —षट्संख्याकैर्गुणैर्युत आनन्दः, तस्य शक्तयः ।

६. एतासामिति–क० । ७. माथुगः–ग० ।

स पश्यति जगन्नाथं [1]कमलोपगतं हरिम् ।
आदौ हरेर्दर्शनञ्च [2]कारयेद्येन कुण्डली ।। १७६ ।

ततो रुद्रस्य सञ्ज्ञायां[3] लाकिन्याः शुभदर्शनम् ।
सर्वंशः[4] क्रमशो नाथ दर्शनं प्राप्यते नरः ।। १७७ ।

शनैः शनैर्महाकाल कैलासदर्शनं भवेत् ।
क्रमेण सर्वसिद्धिः स्यात् अष्टाङ्गयोगसाधनात् ।। १७८ ।

अष्टाङ्गसाधने काले यद्यत् कर्म करोति हि ।
[5]तत्सर्वं परियत्नेन शृणु सादरपूर्वकम्[6] ।

तत्क्रियादिकमाकृत्य[7] शीघ्रं योगी भविष्यति[8] ।। १७९ ।

**।। इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे [9]द्विचत्वारिंशत्तमः पटलः ।।**

●

---

१. कमलोरुगत–ग० । —क्रमलां महालक्ष्मीमुपगत इति तात्पर्यम् । २. कारयत्येव–ग० ।
३. सञ्ज्ञाया–ग० । ४. सर्वासां क्रमतो नाथ–ग० । ५. शृणु–क० ।
६. आदरेण सहितः सादरो व्यापारः, सः पूर्वः यस्मिन् कर्मणि, तद् यथा स्यात्तथा ।
७. माश्रित्य–ग० । ८. भविष्यसि–ख० । ९. त्रिचत्वारिंशत्तमः पटलः–ख० ।

## अथ त्रिचत्त्वारिंशः पटलः

**आनन्दभैरवी उवाच—**

अथ कामातुराणाञ्च कामनि[1]र्मूलहेतुना ।
कथयामि महाकाल यत् कृत्वा कामिनीवशम् ।। १ ।

तत्प्रकारं प्रवक्ष्यामि योगसाधनहेतुना ।
[2]हस्तासनं समाकृत्य ऊर्द्ध्वे पद्मासनं चरेत् ।। २ ।

शिरोमूले करद्वन्द्वं नियोज्य जपमाचरेत् ।
अल्पाल्पधारणं कुर्यात् श्वाससंख्यां समाचरेत् ।। ३ ।

श्वाससंख्यां तदा कुर्याद् यदा कुम्भकसुस्थिरः ।
विना श्वाससंख्यां च कुतो योगिवरो वशी ।। ४ ।

विना संख्याप्रयोगेण विना कुयोगवारणात् ।
कदाचिन्न प्रकर्तव्यं संख्याकुम्भकवर्जितः ।। ५ ।

अल्पाल्पकुम्भकं कुर्यात् खेचरप्रियकर्मणि ।
सर्वकाले प्रकर्तव्यं सर्वकाले सुखी भवेत् ।। ६ ।

आनन्दकल्पमाकृत्य विजयाद्यासवादिभिः ।
क्रमेण भेदनं कुर्यात् ततः साधकयोगिराट् ।। ७ ।

योगिनामपरिच्छिन्नं भावं विद्युत्प्रभाकरम् ।
विद्युत्कोटिसमाभासं[3] वारिधारासमाकुलम् ।। ८ ।

यद्येवं [4]सुतभावज्ञा विपाकेन पतन्ति ते ।
ते यान्ति परमं स्थानं ते यान्ति कोटिराज्यपाः ।। ९ ।

---

१. निर्मणि—ग० । २. मुण्डासन—ग० । ३. समाभाषम्—ग० ।
४. यद्येव सुतभावकाः इति यद्येवं त्वं भावशून्य—क० । यद्येव सुतभावद्यो—ग० ।

ते भोगिनो योगिनश्च ते लोकपालकाः स्मृताः ।
ते महद्‌गुणसम्भोग्या म्रियन्ते न कदा कुतः ॥ १० ॥

ते [1]भवन्ति महाश्रेष्ठास्ते भवन्ति सुधाकराः ।
ते भेदकरणे युक्तास्ते मनुष्या न देवताः ॥ ११ ॥

ते सर्वे यान्ति सर्वत्र ते शिवास्ते च किङ्कराः ।
ते मे भक्ता महाकाल इति मे [2]स्वागमोदयम् ॥ १२ ॥

ये [3]भजन्ति तव पदाम्भोजं भावपरायणाः ।
ते [4]ज्ञानिनो भवन्त्येव तेषां कालो वशो भवेत् ॥ १३ ॥

ये प्राणवायुसंयोगा ये प्राणपरिरक्षकाः ।
आत्महत्यां परीहाय ब्रह्मलोकं मुदान्विताः ॥ १४ ॥

यान्ति नाथ ध्यानपराः संसारार्थविवर्जिताः ।
अरण्यवासिनो ये च [5]नारण्यवासिनो नराः ॥ १५ ॥

एकान्तनिर्जने देशे सर्वविघ्नविवर्जिते ।
षट्‌चक्रभेदमाकृत्य ते नराः फलभागिनः ॥ १६ ॥

महाकालफलं यस्तु [6]सदेच्छति सतां गतिम् ।
स एव योगी भूमध्ये स्थित्वा सर्वत्रगो भवेत् ॥ १७ ॥

सर्वदेशे सदा पूज्यः सर्वेशो निर्मलोऽद्वयः ।
[7]अनाद्यनन्तविभवः कालात्मा[8] स भवेत् क्षणात् ॥ १८ ॥

१. महन्ति–ग० ।

२. बुद्धिमेधागमोदयम्–ग० । —बुद्धेर्मेधायाश्चागमस्योदयो यस्मिन् कर्मणि तत् ।

३. ये भजन्ति तव पदाम्भोजभावनतत्पराः–क० ।
ये भवन्ति पदाम्भोजे तव भावपरायणाः–ख० ।–पदमम्भोजमिव, तस्मिन् पदाम्भोजे इत्यर्थः ।

४. ते भेदज्ञा प्रभवन्ति–ग० । — भेदं जानन्ति इति कप्रत्ययान्तः ।

५. ये चान्यवासिनो नराः–क० ।

६. सदैवैति सतीगतिः ( विशुद्धधीः )–ग० ।

७. न विद्यते आदिर्यस्य तद्, न अन्तो यस्य तत् । एतादृशमनादि अनन्तं विभवं यस्य सः ।

८. काल आत्मा यस्य सः । अथवा कालस्यापि आत्मा ।

एतेषां साधनं शीघ्रं [1]सिद्धिविद्यासुकल्पनम् ।
एतद्रूपं निजं [2]ध्यात्वा भेदं कृत्वा निजस्थलम् ॥ १९ ।

मूलाधारं स्वाधिष्ठानं भेदज्ञानी विभेद्य[3] च ।
कुर्यात् [4]परमसन्दर्भं मणिपूरे विचक्षणः ॥ २० ।

कृत्वा च दर्शनं विद्वान् श्रीकृष्णचरणाम्बुजम् ।
स्वाधिष्ठानादिदेवेन्द्रं शक्तियुक्तं निरञ्जनम् ॥ २१ ।

राकिणीराधिकाव्याप्तं त्रिलोकरक्षणं परम् ।
परमाकाशनिलयं त्रैगुण्यं वारिरूपिणम् ॥ २२ ।

वाञ्छाकल्पतरोर्मूलवासिनं शिववैष्णवम् ।
विलोक्यानन्दहृदयोऽशङ्कः सर्वत्र दर्शकः ॥ २३ ।

कृत्वा योगी सदाभ्यासी मणिपूरं विलोकयेत् ।
मणिपूरं महाचिह्नं सिद्धिक्षेत्रं [5]सुधामयम् ॥ २४ ।

हिरण्यकोटिदानेन गोकोटिदानहेतुना ।
कोटिब्राह्मणभोज्येन यत्फलं लभते नरः ॥ २५ ।

तत्फलं लभते ध्यात्वा मणिपूरं मनोरमम् ।
मणिपूरं महास्थानं योगिनामप्यदर्शनम् ॥ २६ ।

सूक्ष्मातिसूक्ष्मं परमं ज्ञानिनां ज्ञानगोचरम् ।
अप्रकाश्यं महागुह्यं[6] योगयोगेन[7] लभ्यते ॥ २७ ।

---

१. सिद्धिसन्ध्यासुकल्पनम् क० । —सिद्धीनां विद्याः, तासु कल्पनम् ।

२. ज्ञात्वा—ग० ।

३. विभिद्य—क० । —विभेद्य इति पाठे तु विपूर्वकाद् भिदेर्ण्यन्तात् क्त्वो ल्यबादेशः ।

४. नन्दार्द्धमिति गानन्दार्थं—ख० । ५. हिरण्मय—क० । ६. स्थान—क० ।

७. योगानां योगः सम्बन्धो यस्मिन्, स योगयोगस्तेन ।

**आनन्दभैरव उवाच—**

योगार्थं यत्र कमले कोटिविद्युत्समप्रभे ।
कोटिकालाग्निमिलिते कोटिचन्द्रविनिर्मिते ।। २८ ।

कोटिसूर्यादिकिरणे मनः केन विलीयते ।
सूची[1]रन्ध्रे यथा सूत्रं तदेव फलदं सुखम् ।। २९ ।

[2]यन्न दृष्टं श्रुतं क्वापि ज्ञानं न तत्र सुन्दरि ।
तत्र केन प्रकारेण मनोनिवेशनं भवेत् ।। ३० ।

यत्र न गमनं नृणां तस्य देवस्य यत्फलम् ।
तत्फलं किं न जानाति अदृष्टे गमनं कुतः ।। ३१ ।

कुतो राज्ञां न[3]सम्पत्तिः कुतो वा [4]स्वार्थदर्शनम् ।
कुतो वा जायते सिद्धिर्भेदने किं फलं [5]भवेत् ।। ३२ ।

तत्त्वं जानासि देवेशि तत्प्रकारं प्रकाशय ।

**आनन्दभैरवी उवाच—**

यदुक्तं तद्धि सकलं सफलं परमेश्वर ।। ३३ ।

तत्र[6] पूर्वं योगधर्मस्वाश्रयं[7] शृणु तत्क्रमम् ।
पूर्वंस्मरणमात्रेण जीवन्मुक्तो भविष्यसि ।। ३४ ।

जीव एव [8]महाभाग लोकानां मोक्षबन्धगः ।
स जीवो[9] वायुरूपेण महाबलपराक्रमः ।। ३५ ।

---

१. विद्धे तथा–ग० । —सूच्या रन्ध्रे छिद्रे इत्यर्थः ।
२. मया दृष्टं श्रुतं नापि–ग० ।
३. राज्ञाञ्च–ग० । —स्वार्थस्य दर्शनम् ।
४. आत्मदर्शनमिति–क० ।
५. लभेत–ख० ।
६. तब क–ग० ।
७. तत्र पूर्वं योगधर्ममाश्रित्य–ख० ।
८. महान् भागो यस्य ।
९. जीव एव हि कालेन योगानां मोक्षबन्धनः महाकाल–ख० ।

गच्छति प्रत्यहं नित्यं सर्वदा च पुनः पुनः ।
पुनरायाति धरणीं[1] स्वभावेन निरन्तरम् ॥ ३६ ।

नानाभावप्रियः सोऽपि नानाकारनिरूपकः ।
नानाधर्मप्रियः [2]शुद्धोऽशुद्धवेशधरो महान् ॥ ३७ ।

कन्दर्पनिलयो योगी स योगी परमार्थवित् ।
स ज्ञानी निरहङ्कारी [3]सोऽहङ्कारी शरीरधृक् ॥ ३८ ।

सर्वगन्धप्रियोऽदृश्यो भावयेत्तां[4] रहस्यवित् ।
स एव निष्कलः शुद्धः सदा ध्यानपरायणः ॥ ३९ ।

[5]यदा चात्मनि ब्रह्माण्डे[6] ब्रह्मणि त्वयि शङ्करे[7] ।
तन्मनो विलयं याति [8]तदा भावो [9]महान् स्मृतः ॥ ४० ।

तद्भावः परमं ज्ञानं न कथ्यं[10] [10]विपरीतकम् ।
[11]आधारं सुसुखं नित्यं स्वल्प[12] [12]कालविवर्जितम् ॥ ४१ ।

अत्यन्तधर्मसन्धानं[13] प्राप्य योगी भवेन्नरः ।
शनैः शनैः प्रगन्तव्यं तत्र तत्र [14]सुदर्शनम् ॥ ४२ ।

---

१. अवनीमिति–क० । —अवति रक्षति सर्वं जीवजातमित्यवनिः ।

२. प्रियः शुद्धः शुद्धवेशद्यंशे महानिति–क० ।

३. नाहङ्कारी–क० । —अहंकारोऽहंभावोऽस्ति यस्य सः, इनिप्रत्ययो मत्वर्थीयः ।

४. ता–क० । —भावयेत्, मनसा चिन्तयेत् । ५. सदा–क० ।

६. ब्रह्माण्ड–ग० । ७. ब्रह्मण्यद्वय–ख० । ८. यदभाव तदभाव–ख० ।

९. महास्मृतः–ग० । १०. मकथ्यमिति–क० ।

११. स्वाधीन–ख० । —स्वस्याधीनम् ।

१२. कार्येति–ख० ।

१३. पञ्चानमिति–क० । —अत्यन्तं धर्मस्य सन्धानं योजनम् ।

१४. स्वदर्शनं–क० । —शोभनं दर्शनम्, स्वस्यात्मनो दर्शनं वा ।

तत्र तत्र महासिद्धो भूत्वा संसारपुत्रवान्[1] ।
योगिनां बहुकालस्थं मृतानामल्पकालकम् ॥ ४३ ॥

श्वासधारणमाकृत्य बहुकालं सुखी भवेत् ।
यथा बृहस्पतिः श्रीमान् यथा[2] सूर्यो दिवाकरः ॥ ४४ ॥

तथा प्रकाशमाकुर्यात् कोटिभिः [3]स्तोत्रनामभिः ।
स्तुत्वा भूत्वा महाद्रव्यैस्तर्पयित्वा यथाक्रमम् ॥ ४५ ॥

अभिषिक्तः[4] पुनर्ध्यात्वा पूजयित्वा यथाविधि ।
मानसोपचारद्रव्यैः स्वधायुक्तैरथापि वा ॥ ४६ ॥

परमानन्दितो भूत्वा भावयेत् पीठदेवताः ।
भावयित्वा ततो जप्त्वा धर्माधर्मौ विचिन्तयेत् ॥ ४७ ॥

देवतायां मनो योज्य स्थापयित्वा स्वपीठके ।
पुनरुत्फुल्लकमलं मुद्रितं [5]परिकारयेत् ॥ ४८ ॥

षड्दलं[6] मूर्च्छितं कृत्वा दलाग्रे संविशेत् सुधीः ।
सदानन्दः सर्वमयो वेदवेदान्तनामभिः ॥ ४९ ॥

स्तवकोटिभिरेकत्र ध्यात्वा संहारमुद्रया ।
अधोमुखे दशदलकमलाग्रे नियोजयेत् ॥ ५० ॥

षड्दलाग्रं महाकाल नियोज्य गमनं चरेत् ।
ततो गच्छेत् प्रज्वलिते पद्मे दशदले पुरे[7] ॥ ५१ ॥

प्रविश्य कर्णिकामध्ये तन्मयस्तत्क्षणाद्भवेत् ।
तत्क्षणात्तन्मयो भूत्वा कुण्डलीचक्रसंस्थितः[8] ॥ ५२ ॥

---

१. युक्तिमानिति–ख० । —संसार एव पुत्रो भवति इति तद्वानिति भावः । २. तथा–ग० ।
३. तत्र नामभिः–क० । ४. अभिषिच्य–क० । —अभिषिक्तः सम्पन्नाभिषेकः ।
५. परिकल्पयेत्–ख० । ६. षड्गुणम्–क० ।
७. परे–क० । ८. कुण्डलीचक्रे संस्थित इति सप्तमीघटितः समासः ।

असाध्यसाधनं सर्वं [1]मणिपूरस्थनिर्मलम् ।
मणिपूरे महापीठे ध्यानगम्ये [2]सति प्रभो ॥ ५३ ।

मनोनिवेशनं कृत्वा नरो मुच्येत संकटात् ।
मनोयोगी मनोभोगी मनोभक्तो [3]मनोयुवा ॥ ५४ ।

मन एव मनुष्याणां कारणं [4]त्राणमोक्षयोः ।
कारणं सर्वभावानां तद्भावं सन्त्यजेद् बुधः ॥ ५५ ।

सर्वभावं विहायापि महाभावं समाश्रयेत् ।
भावेन लभ्यते मोक्षो भावेन लभ्यते सुखम् ॥ ५६ ।

एतद्भावं सदा कुर्याद् भावाद्भवति[5] योगिराट् ।
भावेन भक्तिमाप्नोति विषयाद्भावमाश्रयेत् ॥ ५७ ।

विषयं विकृतिग्राह्यं सुकृतिज्ञानवर्जितम् ।
[6]त्यक्त्वा दिव्यं महापीठं मणिपूरं समाश्रयेत् ॥ ५८ ।

महायन्त्रे मनो दत्वा निर्माणं कारयेद् बुधः ।
मणिभिर्ग्रंथनं[7] कृत्वा नानामणिविभूषितम् ॥ ५९ ।

सुपीठं [8]कुलपीठे वा लिङ्गपीठमथापि वा ।
श्रीविद्यापीठमालिख्य विभाव्य च पुनः पुनः ॥ ६० ।

ततः प्रस्फुटिते पद्मे दलाग्रे षड्दलस्य च ।
स्थापयित्वा महाविष्णुं पूजयित्वा सुसंयतः ॥ ६१ ।

---

१. मणिपूरं सुनिर्मलमिति–क० । —मणिपूरस्थं निर्मलमित्यर्थः मूलस्थपाठे । मणिपूरं सुनिर्मलमिति भावो द्वितीये पाठे ।

२. सतामिति–क० । ३. मनोवरः–क० । ४. भोग–ग० ।

५. तरति–क० । ६. अत–ग० । ७. ग्रन्थन–ग० ।

८. परमं ध्यात्वा कुलपीठमथापि वा–ग० । कुलपीठे इति पाठे षष्ठीसमासः ।

जप्त्वा च तन्मयो भूत्वा निधाय मणिपूरके ।
दृढाकारमूर्ध्वगतं[1] षड्दलं[2] परिरक्षयेत्[3] ॥ ६२ ।

ततश्चोद्ध्र्वतरे स्थाने महोच्चोत्तरसुन्दरे[4] ।
मनोनिवेशनं कृत्वा शक्ति रुद्रं समाश्रयेत् ॥ ६३ ।

चैतन्यरूपिणीं शक्ति चैतन्यं रुद्ररूपिणम् ।
[5]तत्र भद्रात्मकं रौद्रं रौद्रीं प्रकाशकारिणीम् ॥ ६४ ।

भक्त्या पुनः पुनर्ध्यायेदूर्ध्वरेतास्तमीश्वरम्[6] ।
प्रगच्छन्ति चोद्ध्र्वमार्गे[7]ध्येया योगिभिरेव च ॥ ६५ ।

[8]अहं देवी परानन्दा मणिपूरनिवासिनी ।
तथा श्रीलाकिनीशक्तिः श्रीरुद्रस्त्वं[9] न संशयः ॥ ६६ ।

रुद्ररूपी महादेवो रुद्ररूपा सरस्वती ।
सर्वदा ऊद्ध्र्वगामी च सा शक्तिरूद्ध्र्वगामिनी ॥ ६७ ।

ऊद्ध्र्वमार्गं काशयन्तीं योगिनीं योगमातरम् ।
महारुद्रं तथा ध्यात्वा मणिपूरे सुनिर्मले ॥ ६८ ।

ऊद्ध्र्वमुखं समाकुर्याद् महापद्मं मनोरमम् ।
मणिपूरं महाकान्तं मणिकोटिसुनिर्मलम्[10] ॥ ६९ ।

---

१. मृदुगत–क० । —ऊर्ध्वं गतमिति तात्पर्यम् ।

२. षड्गुणमिति–ग० । —षण्णां गुणानां समाहारः षड्गुणमिति ।

३. परिचिन्तयेत्–ख० ।

४. महोध्योद्भवसुन्दरे–ग० ।

५. भद्रं भद्रात्मिकां रौद्रं रौद्रीं प्रकाशकारिणीम्–ग० ।

६. ऊर्ध्वरेतारमीश्वरम्–ग० ।

७. ध्यायियोगिवरः सदा–क० ।

८. स्वयमिति–ग० ।

९. श्रीरुद्रस्यामिति–ग० ।

१०. मणीनां कोटिसु सुनिर्मलम् ।

कोटिकोटिशरच्चन्द्र[1] पूर्णज्योतिःसमाकरम् ।
ऊर्द्ध्वमुखं समाकुर्यात् स्वयंभावेन जायते ॥ ७० ।

यदि चोर्द्ध्वमुखं पद्मं [2]यन्त्रमण्डलसंयुतम् ।
अतिकोमलपत्रेषु भाति चात्यद्भुताङ्करम् ॥ ७१ ।

लेपयित्वा योजयित्वा[3] स्थापयित्वा पुनः पुनः ।
प्रापयित्वा महारुद्रं त्रैलोक्यजननीं शिवाम् ॥ ७२ ।

रुद्राणीं रौद्रशक्तिञ्च लाकिनीं [4]लोकसाक्षिणीम् ।
कुम्भकं प्राणवायोश्च प्राणवायोश्च योजनम् ॥ ७३ ।

एकत्र मिलनं कृत्वा भावनं [5]परिकारयेत् ।
भावेन लभ्यते मोक्षो भाव एव निजप्रियः ॥ ७४ ।

मनो निवेश्य तत्रस्थो रुद्राराधनमाचरेत्[6] ।
तथा श्रीलाकिनीदेव्याः परमाद्भुतसाधनम् ॥ ७५ ।

शृणुष्व परमानन्द भैरव प्रियवल्लभ[7] ।
ममोपदेशं[8] सन्त्यज्य कोऽपि सिद्धो न सम्भवेत् ॥ ७६ ।

ममाज्ञाबलयोगेन[9] सिद्धो भवति मानवः ।
मुक्तिमूलं महाभावं मुक्तिमूलं हि साधनम् ॥ ७७ ।

मुक्तिक्रमेण कालेन सिद्धो भवति साधकः ।
मम योगक्रमेणैव मम [10]तन्त्रावलोकनात् ॥ ७८ ।

---

१. चन्द्र–ग० । २. यन्त्रचन्द्रमण्डसंयुतम्–ग० । —यन्त्राणां मण्डलानि तैः संयुतम् ।
३. च तत्सर्वमिति–ग० । ४. लोकरक्षिणीम्–ग० । —लोकानां साक्षिणीम्, रक्षिणीं वा ।
५. परिकल्पयेत्–क० । ६. माश्रयेत् इति–क० । —रुद्रस्याराधनं समाचरेत् ।
७. प्राणवल्लभ इति–क० । —प्राणानां वल्लभः, प्रियः ।
८. ममोपदेशविधिना इति–क०, ग० ।
९. मम आज्ञाया बलं तस्य योगेन सम्बन्धेनेत्यर्थः ।
१०. मन्त्रविलोकनमिति–ख०, ग० । —तन्त्राणामवलोकनात्, मन्त्रस्य विलोकनमिति वा ।

कोऽपि नाथ ब्रह्मयोगी भवत्येव न चाखिले ।
सर्वे च योगिनः शीघ्रं प्रभवन्ति[1] न संशयः ॥ ७९ ।
स्फुटाकारदलं कृत्वा विन्यासं तत्र कारयेत् ।
महायोगिकुलन्यासं विद्यान्यासं समाचरेत् ॥ ८० ।
सर्वन्यासं निजन्यासं [2]ज्ञानजालं समाचरेत् ।
मानसक्रियया व्याप्तं देहं [3]मधुरसम्प्लुतम् ॥ ८१ ।
शिवरूपिणमात्मानं वैष्णवं ज्ञानचक्षुषम् ।
[4]एकाकारं मूलयन्त्रध्यानं तत्र समाचरेत् ॥ ८२ ।
ध्यात्वा चार्घ्यं समाकुर्यात् कुलचक्रक्रमेण तु ।
आत्मानमपरिच्छिन्नं विचिन्त्य पुनरेव च ॥ ८३ ।
सन्ध्यायेन्निजचैतन्यदेवतां कुलदेवताम् ।
पाद्यार्घ्यादिक्रमेणैव पूजयित्वाऽप्यहर्निशम् ॥ ८४ ।
परिवारांस्ततो ध्यात्वा तत्सर्वान् परिपूजयेत् ।
धूपदीपौ ततो दद्याद् निजपूजाविधानतः ॥ ८५ ।
प्राणायामं दीपनादौ[5] कुर्यात् साधक एव च ।
भक्त्या ध्यात्वा मनुं जप्त्वा मणिपूरस्थदैवते[6] ॥ ८६ ।
जपं [7]समर्प्य विधिना प्राणायामं पुनस्त्रयम्[8] ।
प्रणम्य स्तोत्रकवचैः स्वदेवीं हृदि चार्पयेत्[9] ॥ ८७ ।

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे भैरवभैरवीसंवादे मणिपूरचक्रभेदप्रकारो नाम [10]त्रिचत्वारिंशत्तमः पटलः ॥**

---

१. भवन्ति च इति–ग० । २. न्यासजालमिति–ग० ।—न्यासानां जालं समूहम् ।
३. मधुरसंयुतमिति–क० । —मधुरेण संयुतम् ।
४. एकाकारं मूलमन्त्रं ध्यानमिति–ग० । —एक आकारो यस्य तम् ।
५. द्वादशादौ–ग० । ६. मणिपूरस्थं दैवतं तत्रेत्यर्थः ।
७. समाप्येति–ग० । —समर्पणं समापनं वा कृत्वा ।
८. पुनर्द्वयमिति–ग० । —त्रयमित्यस्य स्थाने द्वयमिति पाठो ज्ञातव्यः ।
९. चालयेत्–ग० । —अर्पयेदिति शोभनः पाठः । १०. चतुश्चत्वारिंशदिति–ख० पु० पाठः ।

## अथ चतुश्चत्वारिंशः पटलः

**आनन्दभैरवी उवाच—**

मणिपूरविभेदार्थं[1] शृणु वक्ष्यामि तत्त्वतः ।
यं ज्ञात्वा मूढलोकाश्च प्रविशन्ति महाघटे ॥ १ ।

अमूढत्त्वं प्राप्नुवन्ति[2] भवन्ति योगिनोऽमराः ।
खेचरत्त्वं प्राप्नुवन्ति[3] सांख्ययोगनिषेविणः[4] ॥ २ ।

महापातकमुख्यानां नाशं शीघ्रं महारिपुम् ।
कियत्कालेऽनले दोषे जले पर्वतकानने ॥ ३ ।

कुर्वन्ति च [5]दिदृक्षूणां देवतावशमेव च ।
मणिपूरं महापीठं ध्यायेद् यः [6]प्राणसंयमम् ॥ ४ ।

तथा [7]पञ्चामराशवासिद्धिं कृत्वा पूरं विभेदयेत् ।
[8]त्रिलोकजननीं सत्यां शिवामाद्यां त्रियोगिनीम् ॥ ५ ।

मूलाधारात् समुत्पत्त्य गच्छन्ती[9] रसषड्दले ।
प्रकाशं षड्दलं कृत्वा प्रगच्छन्ती [10]प्रभान्विता ॥ ६ ।

---

१. विभेदाय–क० ।

२. अमूढत्वमवाप्नोतीति–ख०, ग० । —मुहधातुर्वैचित्यार्थकः, ततः क्तप्रत्यये कृते सति ढत्व-घत्व-ष्टुत्व-ढलोप-दीर्घेषु कृतेषु मूढशब्दो निष्पद्यते । तदर्थश्च अस्थिरचित्तः । न मूढोऽमूढः तस्य भावोऽमूढत्वम् ।

३. मवाप्नोति–ख०, ग० ।

४. सांख्यतत्त्वनिषेविणः–ख०, ग० ।

५. दिग्विदिक्षूणामिति–क० ।

६. प्राणसंयमः–क० ।

७. पञ्चाशवासिद्धमिति–ख०, ग० । —पञ्च च ते आशवाश्च पञ्चाशवाः, तैरसिद्धम् ।

८. पुस्तके नास्ति–क० ।

९. प्रगच्छन्ति रसच्छदे ।

१०. प्रपूर्वकाद् गमेर्लटः, शत्रादेशे स्त्रीत्वविवक्षायां ङीप् ।

मणिपूरे महाचक्रे त्रैलोक्यजपसाधने ।
[1]सिद्धीनां निलये काम्ये कमनीये मनःप्रिये ।। ७ ।

[2]मनःप्रिया महादेवी [3]सर्वोल्लासनकारिणी ।
खेचरी महदानन्दमण्डिता मन्त्रयोगिनी ।। ८ ।

अनुग्रहकरी सिद्धा विभाव्या तत[4] एव हि ।
[5]आनन्दघनसन्दोहमात्मज्ञानं सुनिर्मलम् ।। ९ ।

मणिपूरं संविभाव्य किन्न सिद्ध्यति भूतले ।
अणिमा लघिमा व्याप्तिर्महाश्रेष्ठादिसिद्धिभाक् ।। १० ।

कौलो वा वार[6]मुख्यो वा ज्ञानी वा साधकोत्तमः ।
योगाभ्यासं यः करोति मणिपूरं समाश्रयेत् ।। ११ ।

मणिपूरस्थितं यः स्तौति नियतः शुचिः ।
स्तवराजस्य पाठेन प्रबुद्धा कुण्डली भवेत् ।। १२ ।

सा देवी परमा माया मणिपूरे [7]स्थिता शिवा ।
प्रबुद्धां कास्यत्येव ततः सिद्धो भवेन्मनुः ।। १३ ।

सिद्धे मनौ पराप्राप्तिरिति मे तन्त्रनिर्णयः ।
यदि चैतन्यमिच्छन्ति कुण्डलिन्याः पराक्रमम् ।। १४ ।

जानाति निजदेहे च '[8]महोदयमनुत्तमम्[9]' ।
तेषां चैतन्यहेतोश्च देवतानां कुलेश्वर ।। १५ ।

---

१. सिद्धिशून्यालये–क० ।
२. पुनः प्रिया–ख०, ग० ।
३. सर्वोल्लङ्घनकारिणी–क० ।
४. तत एवाहि–क० ।
५. घट–ख०, ग० ।
६. नारकाख्यो वा ।
७. मणिपूरनिवासिनी–क० ।
८. महानुदयो महोदयः, सन्महदिति कर्मधारयसमासः ।
९. नास्ति उत्तमो यस्मादिति बहुव्रीहिसमासः, न तु नञ्तत्पुरुषः ।

महास्तोत्रं समाकुर्यात् प्रत्यहं सिद्धिहेतुना ।
सिद्धिकार्यं धर्मकार्यं मणिपूरे [1]समाप्नुयात् ॥ १६ ॥
[2]मणिपूरनिवासिन्याः भेदनं ज्ञानसाधनम् ।
सहस्रनाममलं सिद्धिद्रव्यनिरूपणम् ॥ १७ ॥
नित्यसिद्धिं काम्यसिद्धिं मणिपूरे समाश्रयेत् ।
प्राणबुद्ध्या स्वेष्टदेवीं पूजयेल्लाकिनीं पराम् ॥ १८ ॥
स्वदेवतां पूजयेद्वै मणिपूरे महालये ।
मणिपूरस्थितां रौद्रीं महाशक्तिं महोदयाम् ॥ १९ ॥
सर्वसञ्चारिणीं योग्यां महायोगिप्रियां पराम् ।
निजदेवीपदाम्भोज[3]पूजावत् पूजनं चरेत् ॥ २० ॥
पूजां समाप्य विधिना स्तोत्रं देव्याः समाचरेत् ।
तत्प्राणवायुरूपेण[4] सिद्धीनां नाशहेतवे ॥ २१ ॥
कृतं स्तोत्रं कोटिनाम ब्रह्मणा गुणकात्मना ।
तत्सर्वं प्रकरोष्येतत् प्रकारं ज्ञानशङ्कर ॥ २२ ॥
एतत्स्तोत्रप्रसादेन योगिनस्ते महौजसः ।
अहङ्कारघटी[5]ज्ञानं महाव्याधिनिवारणम् ॥ २३ ॥
महास्तवनमेवं हि साक्षादानन्दवर्धनम् ।
नय[6] भक्तिप्रदं शुद्धं [7]शुद्धानामप्यगोचरम् ॥ २४ ॥
शिवां शक्यामाद्यां दशदलगतां रुद्रमहिषीं
विशालाक्षीं[8] सूक्ष्मां [9]शशियुतजटाजूटमुकुटाम्[10]।
महाविद्युत्कोटिप्रियजडितपीठे त्रिनयनां
महालोकिन्याख्यां दशदल[11]कलां भावयति कः ॥ २५ ॥

---

१. समाश्रयेत्–क० ।
२. मणिपूरनिवासिन्या इत्यारभ्य मणिपूरे समाश्रयेदित्यन्तं कपुस्तके नास्ति ।
३. पदाम्भोजमिति–ग० ।
४. तद्वायुप्राणसदने–क० ।
५. अहङ्कारपराणाञ्च–क० ।
६. लय—क०, भक्तिप्रदमिति च–क० ।
७. शुद्धानामात्मगोचरमिति–क० ।
८. विशालाक्ष्मीम्–ख०, ग० ।
९. शत–ख०, ग० ।
१०. शशिना युतानि जटाजूटमुकुटानि यस्याः सा, अत्यन्तं प्रकाशमयी भास्वरा इति तात्पर्यम् ।
११. गते–ग० ।

[१]मृणालान्तर्ध्वान्तः प्रकटतटसंहारसुभगां
कुलक्षेत्रोल्लासां[२] चरमपददां दीपकलिकाम् ।
सदानन्दाकारां [३]गतिगुणहरां चारुकिरणां
[४]प्रभावर्णश्यामां रुचिरवदनां भावयति[५] कः ॥ २६ ।

[६]प्रतीक्षानन्दाब्धिं प्रकटचरणाम्भोजयुगलां
वियद्वर्णां कान्तां सुरवरसुपूजाविधिरताम् ।
महासूक्ष्मद्वारप्रचलनकरीं भेदनकरीं
दिवायोगाह्लादप्रियजनशिवां भावयति कः ॥ २७ ।

अयोध्यापीठस्थामरुणकमनीं प्रेमगलितां
महारौद्रीं भीमां शतशतरविप्रेमनिकराम् ।
महादुःखार्तानां[७] नयनशुभगां भावविरहां
सतीं सीतामिन्द्रोत्सवनवघटां भावयति कः ॥ २८ ।

---

१. सदान्तर्दन्तध्यानविषयपरामिति-ख० ।
मूलान्तर्वा क......................इति ।

२. कुललेत्रोन्यन्ना मिति ख कुरुक्षेत्रोलासा-ग० ।

३. मतिगुणाहरामिति क तया तारकमयीमिति-क० ।

४. महारौप्यादिस्थां सकलकरुणामिति-ग० । —प्रभावर्णश्यामामिति पाठे प्रभावर्णेन श्यामा मिति विग्रहः ।

५.
प्रसन्नां स्वे देहे कुलपथगतां गीतरमितां
परानन्दश्रेणीं नवरवलतां तामसहराम् ।
महारुद्राक्षिप्तां क्षितिमयहरां चारुकिरणां
महारौप्याद्रिस्थां सकलकरुणां भावयति कः ॥
—क पुस्तकपाठः; किन्तु मूले देयः ।

६. प्रतीक्षानन्दां विप्रगतचरणां कोटिविधुगां
वियद्वर्णां स्वस्थां निखिलवसुपूजा...........।

७. ..........प्रचलनपराम्-ग० । —महादुःखार्तानामिति पाठे महान्ति दुःखानि महादुःखानि, तैरार्तानाम्, महादुःखार्तानाम् ।

सुधाब्धेराह्लादप्रकरणसुरां सौरभकरां
क्रियारूपां याग्यां [1]भुवमणिपूरप्रकृतिगाम् ।
गुरोः स्थानोद्योगां समनदहनां[2] शीतलवरां
त्रितत्त्वां तत्त्वज्ञां शमरहरशक्तिं[3] भजति कः ॥ २९ ।

[4]विकाराकाराङ्गीं तरुणरविकोटिश्रियमिमां
कुलाधारां सारां परमरसधारां [5]जयवराम् ।
कृपाच्छन्नाकामां[6] परमरसभाण्डेषु शुभदां
[7]भजेदिन्द्रां रुद्रां शशिमुखकराह्लादनिकराम् ॥ ३० ।

रसाब्धौ विश्रान्तिं कुपितजनशान्तिं सकरुणां
त्रिलोकज्ञानस्थां मदननिलयां योगनिकराम् ।
मणिद्वीपच्छायां दशदलकलां केवलभवां
भवानीं [8]रुद्राणीं [9]वरदमणिपूरे भजति कः ॥ ३१ ।

[10]कृपाब्धौ किं किं किमनुगतसुतां मौलिनमितां
शिवाङ्कां[11] मूलस्थां सकलमणिपूरस्थिरभवाम् ।
हिरण्याक्षीं तक्षां[12] क्षयकरणरश्मिच्छविशतां
विनोदीं पञ्चास्यप्रियगुणधरां[13]भावयति कः ॥ ३२ ।

---

१. सतां शोतामिति–ग० ।
२. दमनां शीतलवरामिति–ग० ।
३. मुक्तिमिति–क० । —हरतीति हरः, हृधातोः पचाद्यच्-प्रत्ययः । समरस्य कामादि-संग्रामस्य हरो विजेता, तस्य शक्तिम्, भवानीम् ।
४. धाराङ्गीम्–ग० ।
५. जयवरामिति–ग० ।
६. मग्नामिति–ग० ।
७. भवोदभद्रामाद्यां–ग० ।
८. रौद्राणीमिति–क० ।
९. वसदेति–क० ।
१०. कृपासारां दीर्घामनुगत-मौननमितमिति–ग० । —कृपाब्धौ इति पाठे षष्ठीतत्पुरुषः ।
११. शिवाख्यां चनाद्यां.........स्थल–ग० । —शिवाङ्कामिति पाठे शिवस्याङ्कः चिह्नं यस्यां सा ।
१२. सूक्ष्मां.........राश्यां स्थितिकरीम्, रश्मिमविशतीम्–ग० ।
१३. पञ्च आस्यानि मुखानि यस्य सः पञ्चास्यः, तस्य ये प्रिया गुणाः तेजस्वितादयः, तेषां धराम् । धराशब्दः पचाद्यजन्तः ।

महापद्माख्यां सकलधनदानाकुलचलां
चलानन्दोद्रेकप्रचयरससिन्धूद्भवहृदि[1] ।
हृदानन्दो ध्यायेत् सकलगुणदात्रीं[2] सुखमयीं
कलां सूक्ष्मात्यन्तां तिमिरदहनां कोटिधनदाम् ॥ ३३ ।

दशकं यः पठेन्नित्यं श्रीविद्यां सुखदायिनीम्[3] ।
ध्यात्वा हृदयपद्माधो निर्मलात्मा सदा पठेत् ॥ ३४ ।

मणिपूरस्थितं देवं रुद्रं पश्यति योगिराट् ।
रुद्राणीसहितं शम्भुं दृष्ट्वा मुक्तो भवेत् क्षणात् ॥ ३५ ।

जीवन्मुक्तः स एवात्मा योगिनीवल्लभो भवेत् ।
योगात्मा परमात्मा च स हि साक्षादनीश्वरः ॥ ३६ ।

स भित्त्वा मणि[4]पूराब्धिं निर्मलं ज्योतिरुज्ज्वलम् ।
शम्भोरीश्वरयोगज्ञक्रियानाथस्य[5] श्रीपतेः ॥
निकटे याति देव्याश्च स्थाने योगी न संशयः ॥ ३७ ।

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धमन्त्रप्रकरणे षट्चक्रप्रकाशे मणिपूरभेदने भैरवीभैरवसंवादे त्रितत्त्वलाकिनीशक्तिस्तवनं नाम चतुश्चत्वारिंशत्तमः पटलः ॥**

●

---

१. सिन्धुरसहृद्दा मिति—क० ।  २. धात्रीमिति—क० ।

३. दायित्रीमिति—ग० ।

४. मणिपूरस्याधिः समुद्रः, तमिति यावत् ।

५ ईश्वरस्य योगः, तं जानातीति ईश्वरयोगज्ञः तस्य याः क्रियाः, तासां नाथः, तस्येति यावत् ।

## अथ पञ्चचत्वारिंशः पटलः

**आनन्दभैरवी उवाच—**

अथ कालक्रमं वक्ष्ये यत्काले योगिराड् भवेत् ।
तत्कालं प्राणवायूनां निलयं सूक्ष्मसञ्चयम् ।। १ ।

पुनः पुनः सञ्चयने दृढो भवति संवशी[1] ।
क्रियायां सञ्चरन्त्येव योगिन्यो योगमातरः ।। २ ।

[2]यत्काले यत्प्रकर्त्तव्यं भानुरूप्यकुलार्णव ।
काले काले वशो याति परमात्मा निरामयः ।। ३ ।

विना प्रयोगसारेण विना जाप्येन शङ्कर ।
कः सिद्धो जायते ज्ञानी योगी भवति कुत्र वा ।। ४ ।।

अभ्यासमन्त्रयोगेन शनैर्योगी भवेन्नरः ।
प्रभाते ज्ञानशौचञ्च कुण्डलीभावनादिकम् ।। ५ ।

तन्मध्ये चापि संस्कुर्याद् योगं [3]पञ्चामरादिकम् ।
ततो मन्त्रस्नानकार्यं मस्तके जलसेचनम् ।। ६ ।

सन्ध्यावन्दनकार्यञ्च ततः कुर्यात् पृथक् पृथक् ।
तत उत्थाय सद्भूमौ[4] [5]शुद्धकोमलजासने ।। ७ ।

उपविश्य सदाभ्यासी शुद्धकायासनञ्चरेत् ।
तत्कार्यसमये नाथध्यानं चैतन्यमेव च ।। ८ ।

---

१. साधकः–ख० ।  २. तत्काले तत्कर्तव्यमिति तन्निरूपा–ग० ।

३. पञ्चासवादिकम्–ग० । पञ्चामरादिकम्—पञ्च अमरा आदयो यस्य तत्तथा । अन्यपाठेऽपि इयमेव समासस्थितिः ।

४. सम्भूभाविति–ग० ।

५. ऊर्ध्वं–ग० । —शुद्धं कोमलजमासनं तस्मिन् इत्यर्थः ।

[१]कुण्डलिन्याः सदा कुर्यात् तन्मध्ये जपमेव च ।
आसनं सुन्दरं कुर्यात् [२]सव्यापसव्यभेदतः ॥ ९ ।

आसनादिकमाकृत्य शेषे [३]सुस्थासनं चरेत् ।
सुस्थासनं समाकृत्य चोर्ध्वपद्मासनं चरेत् । १० ।

मस्तकाधः केशमध्ये हस्तौ दत्त्वा मनुं जपेत् ॥
चतुरशीतित्रिगुणमासनं भञ्जनं तथा ॥ ११ ।

प्रत्यासनं क्रमेणैव एतेषां द्विगुणं पुनः ।
एतेषामासनादीनां वक्तव्या [४]सङ्ख्यका पुनः ॥ १२ ।

अष्टाङ्गसाधनेनाथ वक्तव्यं सर्वमासनम् ।
प्राणायामं षोडशकमथ[५]वा द्वादशादिकम् ॥ १३ ।

स्वकर्णागोचरं कृत्वा पिबेद्वायुं सदा बुधः ।
ततः समाप्य तत्कार्यं मन्त्रयोगं समभ्यसेत् ॥ १४ ।

समाप्य मन्त्रयोगं च प्राणायामत्रयं चरेत् ।
तत उत्थाय नद्यादिं[६] विलोक्य चान्तरात्मनि ॥ १५ ।

स्नानं कृत्वा महायोगी मानसादिक्रमेण[७] तु ।
तत्रैव मानसं जापं समाप्य जपमेव च ॥ १६ ।

---

१. कुण्डलिन्यामिति–ग० ।
२. सव्यासव्यविभेदतः–ग० ।
३. चोद्धर्वे पद्मासनमिति–ग० ।
४. वक्तव्याः संख्यकाः पुनः–ख० ।

आसनं यः करोत्येव वज्रकायः स एव हि ।
समाप्य चासनं सर्वं बद्धपद्मासने विशेत् ॥
चिबुकं वक्षसि श्रीमान् दत्त्वा कालीं विभावयेत् ।
ततः पद्मासनं कृत्वा प्राणायामं मुद्राचरेत् ॥

क० पुस्तके अधिकः, किन्तु मूले देयः ।

५. तथा वा–ग० ।
६. मद्यादि–ग० । —नदी आदिर्यस्य तत् ।
७. मानसमादिर्यस्य तेन क्रमेणेत्यर्थः ।

एकप्राणायामं[1]कुर्यात् कृत्वा तीरे विशेत् सुधीः ।
पिधाय पीतवसनं धर्माधर्मं विचिन्तयेत् ॥ १६ ।

ततः सन्ध्यावन्दनं च कृत्वा पूजाविधिं चरेत् ।
सर्वत्र कुम्भकं कृत्वा भावयित्वा पुनः पुनः ॥ १७ ।

मणिपूरे महापीठे ध्यात्वा देवीं कुलेश्वरीम् ।
पूजयित्वा विधानेन प्राणायामं पुनश्चरेत् ॥ १८ ।

ततः कुर्यात् साधकेन्द्रो विधिना कवचस्तवम् ।
सर्वत्र प्राणसंयोगाद् योगी भवति निश्चितम् ॥ १९ ।

अथवा कालजालानां वारणाय [2]महर्षिभिः ।
एतत् कार्यं समाकुर्याद् [3]योगनिर्णयसिद्धये ॥ २० ।

विना योगप्रसादेन (न ?) [4]कालः संवशो भवेत् ।
कालेन [5]योगमाप्नोति योगध्यानं स्वकालकम् ॥ २१ ।

योगाधीनं परं ब्रह्म योगाधीनं परन्तपः ।
योगाधीना सर्वसिद्धिस्तस्माद् योगं समाश्रयेत् ॥ २३ ।

योगेन ज्ञानमाप्नोति ज्ञानान्मोक्षमवाप्नुयात् ।
तत्क्रमं श्रृणु भूचक्रे [6]सर्वसिद्ध्यादिसाधनम् ॥ २४ ।

सिद्धिसाधनमन्त्रेण योगी भवति भूपतिः ।
शीघ्रं राजा भवेद् योगी शीघ्रं योगी भवेद् यतिः ॥ २५ ।

---

१. एकं प्राणायामकार्यमिति–ग० । —अयं पाठः समीचीनः प्रतीयते ।

२. महाऋषिः–ग० ।

३. योगिना योगसिद्धये–क० । —योगनिर्णयसिद्धये इत्यपि पाठः समीचीन एव, अर्थसमन्वयात् ।

४. न कालस्य वशो भवेदिति–ग० । ५. योगाधीनमिति–ग० ।

६. सर्वसिद्धादिसाधनमिति–क० । —सर्वासां सिद्धीनामादि प्रमुखं साधनमित्यर्थः । अथवा, सर्वाः सिद्धय आदिभूता यासां सिद्धीनां तासां साधनम् । अन्यपदार्थभूताः सिद्धयो दिव्या इत्यर्थः ।

शीघ्रं योगी भवेद्विप्रो यदि स्वधर्ममाश्रयेत् ।
स्वधर्मनिष्ठताज्ञानं [1]सज्ज्ञानं परमात्मनः ।। २६ ।

तज्ज्ञानेन लभेद् योगं योगाधीनाश्च सिद्धयः ।
सिद्धयधीनं परं ब्रह्म तस्माद् योगं समाश्रयेत् ।। २७ ।

स्वधर्मनिष्ठताज्ञानं स तज्ज्ञानं[2] समाश्रयेत् ।
योगयोगाद्भवेन्मोक्षो मम तन्त्रार्थनिर्णयः ।। २८ ।

योगी ब्रह्मा मुरारिश्च[3] तथा योगी महेश्वरः ।
तथा योगी महाकालः[4] कौलो योगी न संशयः ।। २९ ।

मणिपूरभेदने तु यत्नं कुर्यात् सदा बुधः ।
यदि चेन्मणिपूरस्थदेवताभेदको भवेत् ।। ३० ।

सर्वक्षणं सुखी भूत्वा चिरं तिष्ठति निश्चितम् ।
महाप्रभं सुन्दरञ्च महामोहनिघातनम् ।। ३१ ।

मेघाभं विद्युताभं च पूर्णतेजोमयं परम् ।
मणिभिर्ग्रथितं पद्मं मणीनां पूरमेव च ।। ३२ ।

सूर्यकान्तै[5]श्चन्द्रकान्तैर्वह्निकान्तैर्महोज्ज्वलैः ।
इत्यादिमणिभिः सर्वं परं कान्तिगुणोदयम् ।। ३३ ।

निविडे जलदे मेघे कोटिविद्युत्प्रभा यथा ।
तत्प्रकारं भावनीयं सिद्धानां ज्ञानगोचरम् ।। ३४ ।

[6]अत्यन्तसूक्ष्ममार्गस्थं नित्यस्थानं हि योगिनाम् ।
मणिभिः शोभितं पद्मं मणिपूरं तथोच्यते ।। ३५ ।

---

१. स्वज्ञानमिति—ग० । —स्वस्यात्मनो ज्ञानं स्वज्ञानम् । अथवा सतः परमात्मनो ज्ञानं सज्ज्ञानम् ।

२. सत्यज्ञानमिति—क० ।

३. ब्रह्माद्यवादी चेति—ग० ।          ४. भवेत्काल—ग० ।

५. सूर्यकान्तचन्द्रकान्तवह्निकान्तमहोज्ज्वलः इत्यादि मणिभिः सर्वं पूर्वं कान्तिगुणो दश—क० ।

६. अत्यन्तं सूक्ष्मो यो मार्गस्तत्र तिष्ठतीति भावः ।

दशकोमलपत्रैश्च समायुक्तं मनोहरम् ।
डादिकान्तवर्णयुक्तं स्थिरविद्युत्समाकुलम् ।। ३६ ।

शिवेनाधिष्ठितं पद्मं विश्वालोकनकारकम् ।
आदौ वर्णरूपकाणां[1] ध्यानं कुर्यात् [2]स्वधामयः ।। ३७ ।

महापद्मे मनो दत्त्वा निर्मलं परिभावयेत् ।
डादिफान्ता[3]क्षराणां च ध्यानाज्ज्ञानस्थिरो भवेत् ।। ३८ ।

[4]मनोधैर्यमुपागम्य दिव्यभक्तिं समालभेत् ।
वर्णध्यानं प्रवक्ष्यामि शृणुष्व परमेश्वर ।। ३९ ।

[5]यद्विभाव्यामरो भूत्वा चिरं तिष्ठति मानवः ।
महाधैर्यक्रियां कुर्याद् वायुपानं शनैः शनैः ।। ४० ।

यत्र यत्र मनो याति तन्मयस्तत्क्षणाद्भवेत् ।
पूर्वादिदलमारभ्य ध्यानं कुर्यात् पृथग् पृथक् ।। ४१ ।

डां डां डां डाकिनीन्ता डमरुवररतां[6] तारिणीं ताररूपां ।
डिं डिं डिं डामरस्थां डमरुडमगृहे डंकडिंकिं[7] मनुस्थाम् ।
डं डं डं डामरेशीं डिमिडिमिडिमिगध्वाननिर्माणडोरां
डों डों डों डाकडं डः प्रडुम[8]डमुडां दाडिमामाश्रयामि ।। ४२ ।

ढां ढां ढां गाढढक्कां वरनिकरकरां बाढमाबाढमन्त्रां
ढिं ढिं ढिं नागरूपां भज भज विमलानन्दचित्तप्रकाशः[9] ।
श्रीं ढें ढं वज्रढूं खा खवट मटमरं स्वाहया टोंटबीजां ।
ढोंढोंढों ढक्कढक्कः प्रियढुनकरुणाकामिनों लाकिनीं ताम् ।।४३।

---

१. वल्गुरूपकाणामिति–क० ।
२. सुधाशयः–क० ।
३. डादिभान्ताक्षराणां च–ख० । —ड आदिर्येषां तानि डादीनि, भ अन्तो येषां तानि भान्तानि, द्वयोरनयोरितरेतरयोगद्वन्द्वं कृत्वा अक्षरशब्देन सह पुनः कर्मधारयः ।
४. मनोश्चर्यमिति–ग० ।
५. यदि भाव्यामर–ग० ।
६. करामिति–ख० ।
७. डंकडोंमिगां मनुस्थमिति–क० ।
८. प्रडुममुडुमडुंमिति–क० ।
९. विमल आनन्दो यस्मिन्, तादृशे चित्ते प्रकाशः, परमात्मप्रकाश एव सम्भाव्यते ।

बाणस्थित्यसंस्थां रुचिनकरवणाकारणा वाणवार्णि
वीणां वेणूत्सवाढ्यां मणिगुणकरुणां नं खटीजप्रवीणम् ।
वेणुस्थानां सुमानां मणिमयपवमामन्त्रमालाविलोलां
सिन्दूरारक्तवर्णां तरुणघननवीनामलां भावयामि ॥ ४४ ।

तारां तारकमञ्जजालविमलां तालादिसिद्धिप्रदां
[1]ताडङ्कामतितेजसा मुनिमनोयोगं वहन्तीं पराम् ।
[2]तां तारां तुलसीं तुलां तनुतटां[3] तर्कोद्भवां तान्त्रिकां
श्रीसूर्यायुततेजसीं भज मनः श्रीमातरं तापसीम् ॥ ४५ ।

व्यग्रस्थां[4] स्थानसुस्थां स्थितिपथपथिकां थार्णकूटां
थमालीं गाथां योगां विपथां थमिति थमिति थं
वह्निजायां स्थिरासाम् । चन्द्रज्योत्स्नास्थलस्थां[5]
स्थिरपदमथनामुज्ज्वलामासनस्थां स्थैर्यां
स्थैर्याभिरामां प्रणवनव[6]सुधां चन्द्रवर्णां भजामि ॥ ४६ ।

द्रां द्रीं द्रूं दोर्घदंष्ट्रां दशनभयकरां साट्टहासां कुलेशीं
दोषच्छत्रापहन्त्रीं दिवितरणदशा[7]दायिनीमादरस्थाम् ।
श्लिष्टाह्लादप्रदीप्तामखिलधनपदां दीपनीं भावयामि ॥ ४७ ।

---

१. तातङ्क–ग० ।

२. तातङ्कानिभतेजसामिति–ख० ।

३. तातीयामिति–ख० ।

४. व्यग्रस्थं स्थानसुस्थं............धमानीं
—व्यग्रस्थामिति पाठे तु व्यग्रेषु जनेषु सन्तोषार्थं शान्त्यर्थं च तिष्ठति या सा, ताम् ।
गाथां गाथां विमोथामिति–ख० योथामिति–ग० ।

५. स्थिरास्थामिति–क० ।

६. प्रणवनवसुजामिति ग०, सृजामिति क०,

७. दोषैर्वृत्रापहन्ती दिविदरणादशा दायिनी मादस्थाम् ।
शिष्टाह्लादप्रदीप्तामखिलधनमदनमिति–ग० । –दिवि स्वर्गे तरणस्य या दशा, तां ददाति, तच्छीलाम् ।

धर्मां[1] श्रों ध्यानशिक्षां धरणिधरधरां धूमधूमावतीं तां
धूस्तूराकारवक्त्रां कुवलयधरणीं धारयन्तीं कराब्जम् ।
विद्युन्मध्यार्ककोटिज्वलनधरसुधां कोकिलाक्षीं सुसूक्ष्मां
ध्यात्वा ह्लादैकसिद्धिं धरणिधननिधिं सिद्धिविद्यां भजामि ॥ ४८ ।

नित्यां नित्यपरायणां त्रिनयनां बन्धूकपुष्पोज्ज्वलां ।
कोटचर्कायुतसंस्थिरां नवनवां हस्तद्वयाम्भोरुहाम् ।
नानालक्षणधारणामलविधुश्रीकोटिरश्मिस्थितां
सानन्दां नगनन्दिनीं त्रिगुणगां नं नं प्रभां भावये[2] ॥ ४९ ।

प्रीतिं प्रेममयीं [3]परात्परतरां प्रेष्ठप्रभापूरितां
पूर्णां पूर्णगुणोपरि प्रलपनां[4] मांसप्रियां पञ्चमाम् ।
व्यापारोपनिपातकापलपना[5] पानाय पीयूषपां
चित्तं प्रापय[6] पीतकान्तवसनां पौराणिकीं पार्वतीम् ॥ ५० ।

स्फें स्फें[7] समें फणिवाहनां फणफणां[8] फुल्लारविन्दाननां
फेरूणां वरघोरनादविकटास्फालप्रफुल्लेन्मुखीम् ।
फं फं फं फणिकङ्कणां फणिति फं[9] मन्त्रैकसिद्धेः[10] फलां
भक्त्या ध्यानमहं करोमि नियतं वाञ्छाफलप्राप्तये[11] ॥ ५१ ।

---

१. धक्षां श्रीध्यानसिद्धां ... वस्त्रां ... ध्याना ह्लादादि सिद्धि धवनवत ... इति–ग० ।

२. भावयेदिति–ग० ।

३. परां तपसियाञ्चालामिति–क० । —परात् = परापेक्षया परतराम्, उत्कृष्टतराम् ।

४. प्रपलनामिति–ग० ।

५. कापललपा पानापपीयूषपामिति–ग० ।

६. चित्तप्रापकपीव ... पौराणिकामिति–ग०,

७. स्फामिति–क० ।

८. फलफलामिति–क० ।

९. फणामिति–ग० ।

१०. फणामिति–ग० ।

११. वाञ्छानामिच्छानां फलानि इच्छाविषयप्रयोजनानि, तेषां प्राप्तये ।

विद्युतां कारमध्ये तु विजलीरक्तवर्णकान्[1] ।
एवं ध्यात्वाखिलान् वर्णान् रक्तविद्युद्दलोद्यताम् ॥ ५२ ।

सदा ध्यायेत् कुण्डलिनीं कर्णिकामध्यगामिनीम्[2] ।
वरहस्तां[3] विशालाक्षीं चन्द्रावयवलक्षणाम् ॥ ५३ ।

चारुचन्दनदिग्धाङ्गीं[4] फणिहारविभूषणाम् ।
द्विभुजां कोटिकिरणां भालसिन्दूरशोभिताम् ॥ ५४ ।

त्रिनेत्रां कालरूपस्थां लाकिनीं लयकारिणीम् ।
सिद्धिमार्गसाधनाय ध्यायेद् वर्णान् दश क्रमात्[5] ॥ ५५ ।

चतुर्भुजां षड्भुजां च अष्टहस्तां [6]परापराम् ।
दुर्गां दशभुजां देवीं निजवाहनसुस्थिताम्[7] ॥५६ ।

सर्वास्त्रधारिणीं सर्वां [8]हस्तद्वादशशोभिताम् ।
चतुर्दशभुजां रौद्रीं तथा षोडशपालिनीम् ॥ ५७ ।

अष्टादशभुजां श्यामां हस्तविंशतिधारिणीम् ।
एवं ध्यात्त्वा पूजयित्त्वा रुद्राणीस्तोत्रमापठेत् ॥ ५८ ।

**॥ इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने सिद्धिमन्त्रप्रकरणे षट्चक्रप्रकाशे भैरवीभैरवसंवादे वर्णध्यानकथनं नाम[9] पञ्चचत्वारिंशत्तमः पटलः ॥**

●

---

१. विद्युद्गणो.......ख० ।

२. काशिनीमिति–ग० । —कर्णिकामध्यगामिनीमिति पाठे कर्णिकानां मध्ये गच्छति तच्छीला ताम् ।

३. बहुहस्तामिति–ग० ।

४. दीर्घाङ्गीमिति–ग०,

५. दशाच्छदे–क० ।

६. प्रभा–ख० ।

७. सुप्रियामिति–ग० ।

८. दशहस्तास्त्र–ग० । —हस्तद्वादशशोभितामिति पाठे द्वादशहस्तैः शोभितामिति विग्रहः । तत्र द्वादशपदस्य परनिपातः; पूर्वनिपातस्यानित्यत्वात् । 'समुद्राभ्राद्घ.' इति सूत्रं तत्र प्रमाणम् ।

९. षट्चत्वारिंशत्तमः–ख० ।